न्नारायण एव इति सम्यगेवोच्चैःसमंततो जोघुष्यते ॥ २६ ॥ तेषु हि मायावीपरमानन्दस्य
का वैकुंठमुत्तमम् ॥ स्वामिपुष्करिणीतीरे रमया सह मोदत इति प्रायशस्सर्वत्र घुष्यते॥२७॥
एषा हि वार्ता श्रीस्वामिपुष्करिण्याः पश्चिमे दक्षिणे च तीरे विराजमानयोः श्रीवराहश्रीनि
वासयोर्मध्ये श्रीनिवासविषया श्रीनिवासप्रादुर्भावघट्टेष्वेवेशवार्तायाः पुराणेषु प्रतिपा
दनात् भूदेवीसाहचर्यशालित्वेनैव प्रतिपन्नस्य श्रीवराहभगवतः श्रीदेवीसाहचर्यस्य क्वाप्य
प्रतिपन्नतया कल्पादौ प्रलयार्णवमग्नां धरणीमुद्धृत्य यथापूर्वं संस्थाप्य तदभिमानिन्या भूदे
व्या सह तदानीमेव सुमेरुशिखरादागत्य सुवर्णमुखरीतीरे श्रीवेंकटाचलाधिष्ठानस्य प्रतिपन्न
तया च मध्ये वैकुंठलोकादागमनस्य श्रीदेवीसाहचर्यस्य च दर्शितवचनप्रतिपन्नस्य तद्विषय
त्वासंभवाच्च ॥ २८ ॥ श्रीवेंकटाचलमाहात्म्यविषये शेषधर्मपुराणान्तर्गतेऽष्टचत्वारिंशां
कचिन्हितेऽध्याये हि ॥ देवव्रत महाभाग सुरसिंधुसुत प्रभो ॥ श्रीनिवासस्य माहात्म्यं व
द नो वदतां वर ॥ वैकुंठवासी देवेशो विष्णुः सर्वगतः प्रभुः ॥ कथं प्राप्तो वृषगिरिं तन्मेतपाद
पया वदेति ॥ श्रीनिवासमाहात्म्यं युधिष्ठिरप्रश्नमुखेन प्रस्तुत्य वैकुंठलोके संभ ३१ ॥ प्रत्युत
पावनी ॥ अश्राव्या न्तो मया सातु वक्ष्ये शृण्वन्तु तां कथाम् ॥ मायावी परमार्थंकयतैव पुराण

ठमुत्तमम् ॥ स्वामिपुष्करिणीतीरे रमया सह मोदते ॥ इत्यद्भुततमं वाक्यं श्रु
णाः ॥ तत्र सेवितुमुद्युक्तास्तदाहं च जगद्गुरुम् इति नारदमुखेन वैकुंठलोकवा
तेनैव सह सेन्द्रमरुद्गणमहर्षिगणादीनां श्रीवेंकटाचले श्रीनिवासदर्शने प्रवृत्तिम।
कोटिसूर्यप्रतीकाशश्चंद्रकोटिसुशीतलः ॥ स्वर्लोकाद्भूमिपर्यन्तं प्रादुरासीच्छ्रियः पतिः ॥ स्वा
मिपुष्करिणीतीरे रविमण्डलसन्निभे ॥ विमाने सेवितो देवैः श्रीनिवासोऽवसत्प्रभुः इत्यन्तेन
स्वामिपुष्करिणीतीरे श्रीनिवासाविर्भावोऽभिहितः ॥ २१ ॥ वराहपुराणान्तर्गतप्रथमभागे
त्रिचत्वारिंशांकचिह्निते दशमाध्याये ॥ वेंकटाद्राविदानीं तु सर्वप्रत्यक्षगोचरः ॥ आस्तेह्यंजन
शैलाभः सर्वाभीष्टफलप्रदः ॥ कस्य वा पुण्यशीलस्य रूपमेतत्प्रदर्शितम् इति श्रीनिवासावि
र्भाववृत्तान्तं प्रस्तुत्य दैत्यपीडितानां देवमहर्षीणां भगवंतं प्रपत्तुं क्षीराब्धिं गतानां भगवन्तं
स्तुवतां॥एतस्मिन्नंतरे कश्चिच्छंखचक्रगदाधरः॥ पार्षदः परमेशस्य व्योम्नि चागत्य वै मुनीन्॥
पुरुषः सोऽब्रवीदेवं श्रूयतामिति तान्मुनीन् ॥ आस्ते भूमौ गिरौ क्वापि मायावी कमलापतिः ॥
किमर्थमागतःसद्भिर्युष्माभिः सनकादिभिः ॥ तत्रैव यूयं गच्छध्वमिति चोक्त्वा ययौ पुनः इति
वार्तायाः पार्षदमुखेन प्रवृत्तेः ॥ एवं नारदस्यापिवैकुंठलोकं गतस्य तत्र किंचित्पुरुषमुखेन॥ भू

मौ क्वापि गिरौ विष्णुर्लक्ष्म्या सह विनोदत इति वार्ताप्रवृत्तेश्च प्रतिपादनदर्शनेन ॥एवमेवा
न्यत्रापि श्रीनिवासाविर्भावघट्टएव-ईदृशवार्तायाः प्रवृत्तिप्रतिपादनदर्शनेन च यथोक्तवार्ताप्र
वृत्तिः श्रीनिवासविषयैवेति सुगमम् ॥ ३० ॥ आस्ते चांजनशैलाग्र इत्युपक्रमपर्यालोचने
नापि श्रीनिवासविषयैवेयं वार्ताप्रवृत्तिर्न श्वेतवराहविषयेति विज्ञायते ॥ ३१ ॥ एवं वाराहपु
राणप्रथमभागे चतुस्त्रिंशांकचिह्निते द्वितीये अध्याये ॥ ततः श्वेतवराहश्च स्थापयित्वा धरां त
दा ॥ विभज्य सागरान्सप्त लोकान्सप्त च पूर्ववत् इत्यारभ्य कल्पादौ वराहभगवता कृतं स
सागरपृथिव्यादिलोकस्थापनं प्रतिपाद्य॥ततो गिरिं समारुह्य श्वेतपोत्री हरिः स्थितः॥स्वामि
पुष्करिणीतीरे पश्चिमे पुण्यकानने इत्यादिना तदानीमेव वैनतेयेन वैकुंठलोकादावाह्य स्थापि
ते वेंकटाभिधाने क्रीडाचले स्वामिपुष्करिणीपश्चिमतीरे श्रीश्वेतवराहभगवान् दिव्यविमाने
स्थित इति प्रतिपाद्य तदनंतरं ॥ ततो जातु तटे स्वामिपुष्करिण्यास्तुदक्षिणे ॥ मध्ये विमानं प
द्माक्षः श्रीनिवासः परात्परः॥ अतिष्ठद्देवदेवोऽपि शंखचक्रगदाधर इत्यनेन ॥ पश्चा[illegible]
[illegible]लानंतरं श्रीनिवासभगवानागत्य स्वामिपुष्करिणीदक्षिणभागे दिव्यविमाने [illegible]स्य प्रतिपाद
पादनेन श्रीवराहश्रीनिवासदेवौ पृथक्पृथक् भगवद्दिव्यावतारभूतौ पृथ[illegible] ॥ ३२ ॥ प्रत्युत
[illegible]साराधकयतैव पुराण

क् पृथक् विलक्षणदिव्यचरित्रचेष्टितौ च विराजेते इति स्पष्टमेवाऽयं श्रु
अतोऽत्र श्रीवराहदेवलक्षणमेकरूपमेव विष्णुं स्वीकृत्य श्रीनिवासमूर्तिलक्षणा
रिणीदक्षिणतीरे विराजमानतया पुराणप्रतिपन्नं भगवंतं विष्णुमपलप्य तत्स्थाने स्
र्थमागतःस्कंद एव तत्र तथा स्थित इति कल्पनं न कथंचिदपि संजाघटीति ॥ ३३ ॥ एवं
वाराहपुराणाद्वितीयभागे प्रथमाध्याये कल्पादौ धरणीं प्रलयार्णवमग्नामुद्धृत्य स्थापयित्वा
मेरुशिखरे स्थितस्य श्रीवराहभगवतः सन्निधिं प्रति धरण्यभिमानिन्या भूदेव्या आगमनं
प्रतिपाद्य तयोस्तत्र संजाते संवादे श्रीवेंकटाचलप्रस्तावे श्रीस्वामिपुष्करिणीप्रशंसायां ॥ ए
तेषु प्रवरा देवी स्वामिपुष्करिणी शुभा ॥ अस्यास्तु पश्चिमे तीरे निवसामि त्वया सह ॥
आस्तेस्या दक्षिणे तीरे श्रीनिवासो जगत्पतिः ॥ इति स्वामिपुष्करिणीपश्चिमदक्षिणतीरयो
र्भूदेवीसहितश्रीवराहदेवश्रीभूमिसहितश्रीनिवासदेवलक्षणभगवद्दिव्यावतारयोः प्रतिकल्प
नियतभाविस्थितिं वराहभगवतैवाऽभिहितां प्रतिपाद्य संवादांते ॥ उद्धृत्य धरणीं देवीमा
लिंगेऽथ बाहुभिः ॥ आघ्राय धरणीवक्त्रं वामांके संनिवेश्य च ॥ आरुह्य गरुडेशानं जगाम वृ
षभाचलं ॥ मुनींद्रैर्नारदाद्यैश्च स्तूयमानो महीपतिः ॥ स्वामिपुष्करिणीतीरे पश्चिमे लोक

॥ १६ ॥

पूजिते ॥ तदाद्यास्ते श्रीवराहो मुनींद्रैस्तत्र पूजित इति धरणीदेव्या सहतदानीमेव गरुडमारु
ह्यागतस्य श्रीवराहभगवतः श्रीस्वामिपुष्करिण्याः पश्चिमं तीरमधिष्ठाय वर्तमानत्वं प्रति
पाद्य ततो द्वितीयाध्यायांते ॥ वेंकटाख्ये महाशैले श्रीनिवासो जगत्पतिः ॥ कदा ह्यायाति
देवेशः श्रीभूमिसहितोऽमलः ॥ कथं कल्पांतसंस्थायी भविष्यति जनार्दनः ॥ एतद्ब्रूहि वरा
हात्मन्महत्कौतूहलंममेति श्रीनिवासभगवदागमनविषयं धरणीदेवीप्रश्नमुपक्षिप्य ततस्तृती
याध्याये ॥ वैवस्वतेंऽतरे देवि पूर्वे कृतयुगेंऽतरे ॥ वायोस्तपो महद्दृष्ट्वा श्री[illegible]सहितोऽनघे॥आ
गच्छच्छ्रीनिवासश्च स्वामिपुष्करिणीतटे ॥ दक्षिणेऽस्मिन्पुण्यतमे वि[illegible]नंदसंज्ञिते ॥ वसि
ष्यति च श्रीकांतो वायोः प्रियकरो हरिः ॥ तदारभ्यहृषीकेशः सेनान्यमिपू[illegible]जितोऽनिशम् ॥आक
ल्पांतमदृश्येस्मिन्विमानेऽसौ वसिष्यति ॥ इत्यनेन पूर्वकल्पदृष्टांतं बभूव [illegible]विकालेऽपि किंचित्का
लानंतरं वायुतपश्चर्याफलतया श्रीभूमिसहितश्रीनिवासः समागत्य स्वामिपुष्करिणीदक्षिणे
तीरे स्कंदेनाराध्यमानः सन्नाकल्पांतं निवत्स्यतीति भगवता वराहेणैव समाधानस्य प्रतिपाद
नाच्च श्रीनिवासदेवापन्हवेन स्कंदकल्पनस्य नात्र किंचिदप्यवकाशो दृश्यते ॥ ३८॥ प्रत्युत
स्कंदस्य तारकासुरहत्यादोषनिर्हरणार्थतपश्चर्यार्थमागतस्य श्रीनिवासाराधकयतैव पुराण

प्रतिपन्नस्य भगवदाराधकतयैवाऽवस्थानस्य न्याय्यत्वेनाऽऽराध्यदेवतारूपेणाऽवस्थानं स्वीयपापहरलक्षणं स्वागमनोद्देशविरुद्धं न कथंचिदप्युपपद्यते ॥ ३५ ॥ एवं प्रायशो वेंकटाचलमाहात्म्यपरेषु पुराणभागेषु स्वामिपुष्करिणीपश्चिमदक्षिणतीरयोः श्रीवराहदेवश्रीनिवासदेवयोः पृथगवस्थानं प्रतीयते ॥ ३६ ॥ श्रीपाद्मपुराणेऽपि सप्तविंशांकचिन्हते चतुर्थाध्याये ॥ कदाचिद्भगवान्विष्णुः कारुण्यागण्यपुण्यधीः॥दर्शयन्सकलाँल्लोकान्स्[illegible]दृक्षिपथंगतइत्यारभ्य भक्तानुकंपासहितः श्रीनिवासः परः पुमान् ॥ आविर्बभूव भगवान्स्[illegible]पुष्करिणीतटे इत्यंतेन श्रीनिवासदेवाविर्भावं प्रतिपाद्य ततोऽष्टाविंशांकचिन्हते पंचमाध्य[illegible] सिंहसानुमतः कुक्षौ स्वामिपुष्करिणीतटे ॥ श्वेतस्य पोत्रिपोतस्य प्रादुर्भावः कथं विभ[illegible]रभ्य श्रीवराहदेवाविर्भावं ततः पृथक्प्रस्तुत्य निरूप्य॥तदाप्रभृति देवेशो वराहवपुरूर्जितः॥पातालल्लोकाल्लोकेऽस्मिन्कौतूहलसमाकुलः ॥ स्वामिपुष्करिणीतीरे पश्चिमेऽस्मिन्धरातले इत्यादिना ॥ अव्याजमित्रोऽत्रपोत्री वर्तते दिव्यगात्रभृत् ॥ ल्हादयन्नात्मनः सर्वान्ज्ञानानंदमयान्सुरान् इत्यंतेन श्रीवराहदेवस्य स्वामिपुष्करिणीतीरे वसतः एकोनत्रिंशांकचिन्हिते षष्ठाध्याये ॥ तदाप्रभृति देवेशो वराहवपुरात्मभूः ॥ अनंताचलश्रृंगेऽतर्निक्षिप्तांघ्रिसरोरुहः ॥ देव्या वसुधया सार्धं

स्वामिपुष्करिणीतटे ॥ सुखमास्ते सुरेशानः सुखी रहसि सुंदरः इति श्रीवराहभगवतः स्थितिमुक्त्वा तदुत्तरमेव ॥ श्रीनिवासोऽपि शेषाद्रौ ततः स्वामिसरस्तटे॥निवसन्नात्मनः कुर्वन्नर्वाचीनान्सुखात्मन इत्यारभ्य पुराणपुरुषो धाता पुरुषस्तमसः परः ॥ वैकुंठपूर्ववसतिं त्यक्त्वेदानीं हि तिष्ठति इत्यनेन स्वामिपुष्करिणीतीरे श्रीवराहदेवात्पार्थक्येन श्रीनिवासभगवतोऽवंस्थितेश्च प्रतिपादनेन श्रीमहाविष्णुः श्रीवराहश्रीनिवासलक्षणाभ्यां द्वाभ्यां रूपाभ्यांस्वामिपुष्करिणीतीरे सदा सन्निहितो वर्तत इति स्पष्टमवगम्यते ॥ ३७॥ यद्यपि पाद्मपुराणे त्रयस्त्रिंशांकचिह्निते दशमाध्याये ॥ पश्चिमे स्वामिसरसस्तीरे प्रत्यग्रविग्रहं॥ विमानमाविर्बभूव विमलानंदकारकमिति श्रीनिवासविमानाविर्भावः॥ तत उपरिष्टात् स्वामिपुष्करिणीतीरे पश्चिमे भूत्यपश्चिमे ॥ वृंदारकाणां वृंदैस्तु प्रार्थितो लोकरक्षकः ॥ आविर्बभूव भगवान् श्रीनिवासः परः पुमानिति श्रीनिवासाऽविर्भावश्च स्वामिपुष्करिणीपश्चिमतीरे जात इति प्रतिपाद्यते॥ अन्यपुराणेषु च दक्षिणतीरे जात इति प्रतिपाद्यत इति किंचिद्भेदोऽवगम्यते ॥ ३८ ॥ तथापि श्रीनिवासतद्विमानयोराविर्भावस्य स्वामिपुष्करणीदक्षिणपश्चिमभाग एव जातत्वेन तादृशस्थानस्य दक्षिणत्वेन पश्चिमत्वेन च निर्देशयोग्यत्वान्न विरोध इति बोध्यम् ॥ ३९ ॥ एवं मार्कं

डेयपुराणेऽपि प्रथमाध्याये ॥ तत्स्यानुभावं प्रपदामि भूयः समस्ततीर्थानि भवंति तत्र ॥ एवं समस्तेषु च मुख्यतीर्थं श्रीस्वामिनामास्ति सरोवरं ततः ॥ माहात्म्यमेतस्य मयोच्यते कथं यत्पश्चिमे रोधसि भूवराहः ॥ आलिंग्य कांतामपि सौम्यमूर्तिर्विराजते विश्वजनोपकारी ॥ तद्दक्षिणतटे रम्ये वैकुंठपुरवल्लभः ॥ आलिंगितवपुर्लक्ष्म्या वरदो वर्तते चिमिति ॥ भविष्योत्तरपुराणतृतीयाध्याये॥एवं तीर्थवरा तत्र स्वामिपुष्करिणी शुभा॥तस्याःपश्चिमदिग्भागे वराहवदनो हरिः॥ धरामालिंग्य वल्मीक आस्ते पिप्पलराजतइति ॥ इत्थं विचार्यमाणे तु स्वामिपुष्करिणीतटे॥दक्षिणे विमलं देवं वल्मीकं दृष्टवान्मुदा॥ तिंत्रिणीवृक्षमूलस्थं भगवाञ्जगदीश्वरः ॥ मत्वेदं परमं स्थानं तत्र लीनोऽभवद्धरिरिति च द्विरूपस्य भगवतः स्थलद्वयेऽवस्थानं स्पष्टमुक्तं ॥ ४०॥ स्कंदपुराणांतर्गते प्रथमे भागे सप्तमाध्यायेऽपि दर्शितमार्कंडेयपुराणसमानानुपूर्विकाण्येववचनानि दृश्यंते ॥ ४१ ॥ तत्रैव प्रथमाध्यायस्थितैः प्राग्द्वितीयस्तबकचतुर्दशवाक्योदाहृतैर्वचनैः स्कंदपुराणद्वितीयभागात्मकसप्तत्रिंशांकचिन्हिताध्यायस्थितैः ॥ तं गत्वा वेंकटं शैलं स्वामिपुष्करिणीजले ॥ सुतेन साकं विप्रेंद्रः सस्नौ नियमपूर्वकं ॥ वराहस्वामिनं नत्वा श्रीनिवासालयं गतः ॥ प्रदक्षिणं ततः कृत्वा विमानं संप्रणम्य च ॥ पद्मनाभोथ पुत्रेण केशवे

न दुरात्मना ॥पपौ कटाहतीर्थं तद्ब्रह्महत्यादिनाशकमिति वचनैश्च श्रीवेंकटाद्रौ श्रीस्वामिपुष्करिणीतीरे द्विरूपस्य भगवतः पृथकगवस्थानं स्फुटतरमवगम्यते ॥ ४२ ॥ एवं ब्रह्मोत्तरखंडांतर्गतपंचाशाध्यायस्थेन ॥ स्वामितीर्थमिति ख्यातं सर्वतीर्थोत्तमोत्तमम् ॥ तत्तीरे दक्षिणे विष्णुर्लक्ष्म्या सह विनोदत इति वचनेन स्वामिपुष्कारिणोतीरे लक्ष्म्या सह भगवतः श्रीनिवासस्य सद्भावः ॥ सप्तत्रिंशांकाचिन्हिते वामनपुराणाष्टादशाध्याये॥ मुनयस्त्वथ भूपाल तद्वाक्य समनंतरं ॥ ददृशुर्विमलं दिव्यं विमानं भास्करोपमम् ॥स्वामिपुष्करिणीतीरे दक्षिणे लोक विश्रुते ॥ नारायणाश्रितं दिव्यं नित्यं च महद्भुतमिति तत्र सविमानश्रीनिवासाविर्भावस्फुटमवगम्यते ॥ ४३ ॥ एवं स्कंदपुराणभागद्वये वामनपुराणे पुरणांतरेषु च श्वेतवराहश्रीनिवासाविर्भावौ पार्थक्येन प्रतिपादितौ द्रष्टव्यौ ॥ ॥४४ ॥ एवं भविष्योत्तरपुराणादिषु श्रीवराहभगवतः श्रीनिवासदेवस्य च परस्परसंवादः श्रीनिवासदेवस्याऽऽकाशराजकन्यापरिणयस्तदर्थं श्रीनिवासेन भूमिसहितवराहभगवत आव्हानं चेत्येवमादीनि बहूनि विचित्राणि विपुलानि चरित्राणि प्रतिपाद्यमानानि द्विरूपस्य भगवतः श्रीवेंकटाद्रिश्रीस्वामिपुष्करिणीतीरवासित्वं प्रस्फुटमेवाऽवगमयन्तीति न श्रीनिवासदेवस्याऽपन्हवःकेनचित्कर्तुं शक्यः॥४५

एवं प्रथमस्तबकोदाहृतायां अरायिकाणइत्यादिश्रुतौ शिरिंबिठस्येति श्रीनिवासवाचकशब्द प्रयोगोपि वराहदेवातपार्थक्येनाऽस्मिन्गिरौ श्रीनिवासदेवसद्भावे पर्याप्तं प्रमाणं भवितुमर्हति ॥ ४६ ॥ एव मस्य देवस्य परिदृश्यमानैर्लिंगैरप्ययं देवो न स्कंदोऽपि तु भगवानेवविष्णुरिति निरूप्यते ॥ ४७ ॥ स्वामिपुष्करिणीदक्षिणतीरे संप्रति विराजमानस्य हि देवस्य चत्वारो बाहवो दृश्यन्ते ॥ चतुर्बाहुत्वं च भगवत एव प्रसिद्धं न क्वचित्स्कंदस्येति नासौ स्कंदः ॥ ॥ ४८ ॥ यथोक्त वामनपुराणे एकविंशांकचिन्हिते द्वितीयाध्याये बृहस्पतिकृतस्कंदस्तुतौ ॥ एकवक्त्रो द्विबाहुश्च कुमारः पुरुषोत्तमः ॥ मातृप्रीत्या च षड्वक्त्रः पार्वतीप्रीतिवर्धन इति ४९ अत्र हि स्वभावत एकवक्त्रत्वं द्विबाहुत्वं चाभिधाय स्तन्यदायिषण्मातृप्रीतिबलात्षण्मुखत्वं जातमिति वक्त्रसंख्याधिक्यमौपाधिकमभिधाय तदानुगुण्येन द्वादशहस्तविराजितहेतिरित्यौपाधिकमपि वा द्वादशत्वलक्षणबाहुसंख्याधिक्यमेवाभिहितं न चतुष्ट्वलक्षणबाहुसंख्याधिक्यमपि ॥ ५० ॥ यद्यप्यस्य देवस्य स्कंदत्वमभ्युपगम्य तपोवस्थायामायुधप्रहाणेन निरायुधपाणित्वमुपपद्यत इति समर्थनं॥५१॥तदप्यसाधु अधिकारिविशेषस्य तपोनुष्ठानार्थंवनं गच्छतोऽपि दुष्टजन्तुदूरीकरणाद्यर्थं स्वाधिकारप्राप्तायुधसद्भावस्याऽदुष्टत्वादावश्यकत्वाच्च देवसे

नाधिपत्यलक्षणाधिकारविशेषभाजोऽस्यस्वायुधप्रहाणायोगात् ॥ ५२॥ प्रतिपद्यते हि श्रीरामायणभरतादिषु रामलक्ष्मणभरतार्जुनादीनामरण्यादिषु जटिलत्वादिलक्षणतपोवस्थाजुषामपि स्वाधिकारप्राप्तधनुस्तूणीराद्यायुधधारिता ॥ ५३ ॥ द्वाविंशांकचिन्हिते दर्शितवामनपुराणतृतीयाध्याये तपश्चर्यार्थं वेंकटाचलं प्रति प्रस्थितस्याऽस्यस्कंदस्याऽऽयुधधरत्वमेव प्रतिपाद्यते न तु तत्प्रहाणं क्वचित् ॥ ५४॥ यथोक्तं तत्र॥तपसोऽर्थे प्रयाते तु स्कंदे कांचनतेजसि ॥ देवसेनासमायुक्ते धनुश्शक्तिधरे द्विजा इति ॥ ५५॥ उत्तरत्रापि न क्वचिदस्याऽऽयुधप्रहाणं पुराणप्रतिपन्नं॥५६॥ अयं च देव आयुधधारणार्हाभ्यां मूर्ध्वाभ्यां भुजाभ्यां वरप्रदानोद्यतेनाधरेण दक्षिणेन पाणिना स्वचरणारविंदयुगलं प्राप्यप्रापकतया प्रदर्शयताऽपरेण कटिन्यस्तेन वामेन पाणिना स्वाश्रितानां भवजलधेः कटिदघ्नत्वं सूचयता च विराजते ॥५७॥ ईदृशश्चाऽवयवसन्निवेशविशेषः शंखचक्रधरस्य भवजलनिधेस्तितीर्षुमुमुक्षुजनोपास्यदिव्यचरणनलिनयुगलस्य निखिललोकाराध्यवेषस्य भगवतो नारायणस्यैव युज्यते ॥ ५८ ॥ न पुनः स्वपातकहरणार्थं तपश्चर्यापरायणस्याऽऽराधकतावेषैकयोग्यस्याऽस्य स्कंदस्याऽयं सन्निवेशः कथंचिदपि युज्यते ॥ ५९ ॥ किं बहुना दक्षिणवक्षस्थलदृश्याभ्यां श्रीदेवीश्रीवत्सांका

भ्यामनितरसाधारणलांच्छनाभ्यामयं देवः श्रीमहाविष्णुरिति मन्दमतिभिरपि सुनिर्ण
यो ह्ययमंशः ॥ ६० ॥ पुराणस्थेषु श्रीनिवासदेवस्वरूपप्रतिपादनपरघट्टेषु च श्रीनिवा
सभगवत उपदर्शितपरिदृश्यमानावयवसन्निवेशविशेषादिकं स्फुटतरं प्रतीयते ॥ ६१ ॥ य
थोक्तं श्रीवराहपुराणप्रथमभागे सप्तचत्वारिंशांकचिन्हिते पंचदशाध्याये ॥ केयूरांगतसद्भू
षं वृत्तायतचतुर्भुजं ॥ ज्वालायितसहस्रारसुदर्शनधरं परम् ॥ शरच्चंद्रप्रतीकाशपांचजन्यधरं
शुभं ॥ अश्रान्तवरदानोद्यद्दक्षपाणिसरोरुहं ॥कटीतटसुविन्यस्तवामपाणिजलेरुहमिति॥६२
अत्र चतुर्भुजमित्युक्तभुजचतुष्टयस्यविन्यासविशेषप्रदर्शनपरं ज्वालायुतेत्याद्युपरितनपादच
तुष्टयं ॥ ६३ ॥ पाद्मपुराणे त्रयस्त्रिंशांकचिन्हिते दशमाध्याये ॥ चतुर्भुजः शंखचक्रवरावनतिह
स्तकः ॥ श्रीवत्सकौस्तुभोरस्को वैजयन्त्या विराजित इत्युक्तं ॥६४॥ अत्र वरशब्देन वरदान
मुद्रा अवनतिशब्देन कटितटविन्यासलक्षणावनतिमुद्रा च विवक्षिता समानप्रकरणवचनान्त
रैकण्ठ्यात् ॥६५॥ त्रिषष्टितमांकचिह्निते गारुडपुराणाध्याये ॥ अरुंधती महाभागा लक्ष्म्यालिं
गितवक्षसं॥दृष्ट्वा हरिं वेंकटेशं प्रणनाम मुदान्वितेत्यनेनतदुपरितनेनारुंधतीस्तोत्रगतेन॥यस्यो
रस्यनिशं विभाति जगती सौभाग्यधात्री रमा धत्ते यस्य पदावनेजनजलं मूर्ध्ना पुरारिः सदा॥

श्रीमद्वेंकटशैलनित्यनिलयं देवोत्तमं त्वां विना दृष्टादृष्टफलप्रदं किमपरं दृष्टं क्षितौ दैवतं इति वचनेन च श्रीवेंकटेशं साक्षात्कुर्वन्त्याऽरुंधत्या श्रीनिवासोलक्ष्म्यालिंगितवक्षस्कत्ववेषेण दृष्ट इति स्पष्टमवगम्यते॥६६॥ब्रह्माण्डपुराणे नवमाध्याये चक्रवर्तिनःश्रीनिवाससाक्षात्कारघट्टे॥तन्मध्येऽसौ नीलजीमूतकल्पं पद्मावासं संश्रितत्राणहेतुं॥श्रीवत्सांकं पुण्डरीकायताक्षंशंखं चक्रं धारयन्तं कराभ्यां॥ दातारं तं पाणिना वै वराणामन्येनांकं बिभ्रतं भ्राजमानं॥ पीतं वस्त्रं बिभ्रतं राजमानं कोटीरांतप्रोतरत्नोपशोभं॥ शान्ताकारं शाश्वतं श्रीनिवासं सेव्यं देवैर्वासुदेवं ददर्श इत्यनेन लक्ष्मीश्रीवत्सौ वक्षोलक्षणे शंखचक्रवरदानमुद्राकटितटविन्यासमुद्रारूपाणि भुजचतुष्टयलक्षणानि च भगवति चक्रवर्ती ददर्शेति तदन्तर्गत एव वसिष्ठनारदसंवादात्मके पृथग्भूते श्रीवेंकटेशसहस्रनामाध्यायेपि श्रीनिवासध्येयाकारवर्णने॥ ऊर्ध्वौ हस्तौ यदीयौ सुररिपुदलने बिभ्रतौ शंखचक्रे सेव्यावंघ्री स्वकीयावभिदधदधरो दक्षिणो यस्य पाणिः॥ तावन्मात्रं भवाब्धिं गमयति भजतामूरुगो वामपाणिः श्रीवत्सांकश्च लक्ष्मीर्यदुरसि लसतस्तं भजे वेंकटेशमित्यनेन यथोक्तभगवदसाधारणसर्वलक्षणविशिष्टवेषेणैव श्रीनिवासो ध्येय इति च स्पष्टमुक्तम्॥६७॥ यादृशरूपेण श्रीनिवासभगवांश्चक्रवर्तिनादृष्टस्तेनैव रूपेण तत्र भगव

तः सर्वदृश्यतयाऽत्रस्थानमपि चक्रवर्तिना प्रार्थितं तथैवांगीकृतं च भगवतेति तत्रैव नव
माध्याय उक्तम् ॥६८॥ यथोक्तं तत्र ॥ राजपुत्र उ०॥ यत्तद्रूपं दुर्लभं योगिवर्यैरम्यं भूयादीदृशं
सर्वदृश्यं ॥ अत्रैव त्वं सर्वदा वासमीयाः सर्वेषां वै मानवानां हिताय ॥ ओमित्युक्त्वाथापरं प्राह
वाक्यं मद्भक्तस्त्वं नास्ति तुल्यस्त्वयान्य इति ॥ ६९ ॥ मार्कण्डेयपुराणे द्वितीयाध्याये स
विमानश्रीनिवासाविर्भावप्रतिपादनघट्टे ॥ तन्मध्यस्थं दिव्यमूर्तिं वरेण्यं शंखं चक्रं धारय
न्तं कराभ्यां ॥ सव्यत्वेन स्वं पदांभोजयुग्मं सर्वेषां संदर्शयन्तं करेण ॥ सांघ्रिद्वंद्वं संश्रितानां
जनानां संसाराब्धिर्जानुदघ्नः किलेति ॥ न्यस्तेनोरौ वामतो दर्शयन्तं सव्येनान्येनापि हस्तेन
सम्यक् ॥ सर्वाभीष्टं दातुमुद्युक्तहेतिं भक्तानां श्रीवासवक्षःस्थलं च ॥ मंदस्मेरश्रीमुखंभूषणा
ढ्यं सर्वे श्रीमद्वेंकटेशं ह्यपश्यन् इत्येन यथोक्तावयवसन्निवेशविशेषादिविशिष्टं श्रीनिवा
सं ब्रह्मादयः सर्वे ददृशुरित्यभिहितम् ॥ ७० ॥ तत्रैव चतुर्थाध्यायेऽपि कुमारं प्रति भगव
दाविर्भावघट्टे ॥ शंखं चक्रं धारयंतं कराभ्यां फलप्रदर्श्यूरुगवामहस्तं ॥ प्राप्याविमावित्य
परेण पादौ संदर्शयंतंकरपंकजेनेति तथाविधावयवसन्निवेशविशेषो भगवता स्कंदाय दर्शित ॥ २१ ॥
इति भविष्योत्तरपुराणत्रयोदशाध्यायान्ते ॥ वरपद्मासने सुस्थां विधाय कमलालयाम् ॥ पद्मा

वर्तीं विशालाक्षीं भगवानात्मवक्षसि ॥ अरिशंखविहीनोऽसौ कटिन्यस्तकरोत्तमः ॥ दर्शयन्पा
णिनैकेन दक्षिणेन वृषाकपिः ॥ पदपद्मं सदाराध्यं गतिं च परमां नृणाम् ॥ कटिन्यस्तकरेणा
पि निजपादाब्जगामिनाम् ॥ नृणांभवपयोराशिं कटिदघ्नं प्रदर्शयन् ॥ विराजते वेंकटेशः संप्र
त्यपि रमापतिः इत्यनेन संप्रति विद्यमानं रूपमित्थंभूतमिति च स्पष्टमुक्तम् ॥ ७१ ॥ च
त्वारिंशांकचिन्हिते वामनपुराणैकविंशाध्याये यत्र स्वामिपुष्करिणीदक्षिणतीरे योसौ सविमा
नः श्रीनिवास आविर्भूतो ब्रह्मादिप्रत्यक्षगोचर आसीत् तत्रैव स भगवानदृश्य स्वीयाप्रा
कृतविमानः स्वयं च दृश्यमानः सन्मनुजकारितविमाने स्थास्यतीत्यगस्त्येन मुनींद्रान्प्रत्यु
क्तत्वादगस्त्यादिभिरत्रैव भगवतो दृश्यमानतयाऽवस्थानप्रार्थनया भगवता तथैवाऽ
त्राऽनवरतवासांगीकारस्य तत्र तत्र पुराणेषु प्रतिपादनदर्शनाच्च श्रीनिवास एवाऽयमिति
स्पष्टमवगमनेन नात्र स्कंदस्याऽऽवासादिकल्पनेन श्रीनिवासापन्हवः कर्तुं शक्यः ॥ ७२ ॥
उक्तं हि यथोक्त वामनपुराणाध्याये ॥ अगस्त्यो भगवान्भूप मुनिंद्रानिदमब्रवीत् ॥ यदेतद्द
र्शितं दिव्यं विमानं लोकपावनम् ॥ पूर्वं भगवता तेन विष्णुना प्रभविष्णुना ॥ तदत्रैव महा
शैले सदा तिष्ठति पूजितम् ॥ अंतर्हितं न केनापि शक्यते द्रष्टुमंजसा ॥ युगेयुगे च यः क

श्चित्तपसा भावयेद्धरिं ॥ सतस्य कृपया दिव्यं विमानं पश्यति ध्रुवम् ॥ आगामिनि कलौ चापि संप्राप्ते पुण्यमुत्तमम् ॥ विमानं सर्वपापघ्नं विष्णुनाधिष्ठितं सदा ॥ पश्यतां सर्वभूताना माल्हादजनकं शुभम् ॥ देवर्षिदैत्यगंधर्वदेवसिद्धनिषेवितम् ॥ मनुजैरेव तद्भक्तैः कारितं लक्षणान्वितम् ॥ भविष्यति महाश्चर्यं मुनींद्रा नात्र संशयः ॥ तत्रैव भगवान्विष्णुः स्थास्यत्यक्षयशक्तिधृत् ॥ विमाने तु जगन्नाथः पूर्वदृष्टो हरिःस्वयम् ॥ शंखचक्रधरः श्रीमांश्चतुर्बाहुस्वरूपवान् ॥ अस्मिञ्जगति विप्रेंद्रा विश्रुतं च भविष्यति ॥ विमानं तदघौघघ्नं त्रैलाक्यतिलकोपमं इति ॥ ७३ ॥ अयमंशोऽनेकपुराणेषु तत्रतत्र विद्यमानो द्रष्टव्यः ॥ ७४ ॥ स्कंदस्तु कुमारधारा तीर्थ एव नियतवासस्तत्र वसन्नेवाऽऽगत्य यथाकालं स्वामिपुष्करिणीतीरे विराजमानं भगवंतं श्रीनिवासमाराधयन्नद्रावास्तेति दर्शितवामनपुराणे एव चतुर्विंशांकचिन्हिते पंचमाध्याये पार्वतीं प्रति महादेवेनऽभिधानप्रतिपादनान्नासौ स्वामिपुष्करिणीदक्षिणतीरे विराजमानो देवः स्कंदः ॥ अपि तु तदाराध्यभूतो भगवाञ्छ्रीनिवासदेव एवेति प्रस्फुटमेवाऽवगम्यते ॥

॥ ७५ ॥ यथोक्तं तस्मिन्नध्याये ॥ आस्ते वृषाचले देवः श्रीभूमिसहितोऽनघे ॥ अप्रत्यक्षालयो दृश्यो विहरन्गिरिमूर्धनि ॥ नानाद्रुमलताकीर्णे सर्वर्तुगुणशोभिते ॥ स्वामिवापीसमीपे तु

कोटिकंदर्परूपवान् ॥ आस्ते लक्ष्म्या च धरया रमन्षोडशवार्षिकः ॥ दृष्ट्वा गुहोऽपि तं देवं चैत्र
मासे शुभे तिथौ ॥ आराधयंस्त्रिसंध्यं वै देवगंधर्वकिन्नरैः ॥ नृत्यैरप्सरसां चैव गीतवादित्रनिः
स्वनैः ॥ रमयंश्च रमानाथमुत्तरे गव्हरे गिरेः ॥ कुमारधारिकानाम तत्र निर्झरिणी शुभा ॥ म
यूर वाहको देवि तस्यास्तीरे वसत्यहो ॥ ब्रह्महत्या तु या तस्य दुःसहा घोररूपिणी ॥ सा वृषाच
लशृंगाग्रे दृष्टमात्रे बहिःस्थिता ॥ कामयमानः शेषाद्रौ नित्यसेवां हरेरसौ ॥ पुनरागमनं देवि
षण्मुखो नाभिवांछति इति ॥ ७६ ॥ इत्थमाराधकत्वेन वस्तुमिच्छतोऽस्य नाराध्यत्वेनाऽ
त्रावस्थानं युज्यते ॥ ७७ ॥ न च तस्याऽत्र तथावस्थानं क्वचिदेषु पुराणेषु प्रतिपाद्यते ॥
॥ ७८ ॥ प्रत्युत अप्राकृतेऽस्मिन्भगवतिभगवत्क्रीडाचले प्राकृतानामाराध्यतयाऽवस्थानं निषि
द्धतयैवाऽवगम्यते ॥ ७९ ॥ यतोऽतोऽप्यधिकस्यैतत्पितु र्महादेवस्याऽस्मिन्गिरावेव भग
वता सह वस्तुं वांछतो भगवतैवाऽस्मिन्पर्वते वासमनुज्ञायोपत्यकायां वासोऽभ्यनुज्ञातः ॥
यथोक्तं वराहपुराणप्रथमभागे पंचाशांकचिह्नितेऽष्टादशाध्याये ॥ इत्युक्त्वा कमलानाथः प्राहे
शानं शुचिस्मितः ॥ किमागमनकार्यं ते वद शंकर सत्वरम् ॥ इति पृष्टः शिवः प्राह स्वामि
न्नित्यच्युतं वचः ॥ स्वामिंस्त्वया सदा यत्रा स्थीयते वेंकटेश्वरः ॥ तत्रैव देव स्थातव्यं मया वृष

गिरीश्वर ॥ इति पृष्टः पुनः प्राह नीलमेघसमद्युतिः ॥ आकल्पं च वसामीह वेंकटाह्वयभूधरे ॥ त्वमप्यत्र मृडानीश माहादेव वस प्रभो ॥ उपत्यकायामस्याद्रेः शोचिष्केश दिशीश्वरेति ॥ ॥ ८१ ॥ इत्थं महादेवस्याप्यस्मिन्वेंकटाचले लोकानामाराध्यतयाऽवस्थानस्य प्रतिषेध सिद्धौ स्कंदस्य तथावस्थानासंभवः किं पुनर्न्यायसिद्ध एव ॥ ८२ ॥ तथा च स्वामिपुष्क रिणीदक्षिणतीरे श्रीनिवासदेवो यथा देवादीनां प्रत्यक्षविषय आविर्भूतस्तथैव तत्राऽऽगस्त्या दिप्रार्थितो नित्यं वर्तते स एव चार्चारूपेणाऽद्याप्यत्र सर्वदृश्यो विराजत इति नात्र स्कंद स्याऽवकाशः ॥ ८३ ॥ एवं ब्रह्मपुराणतृतीयाध्याये भगवता श्रीनिवासेन चोदितः शंखरा जो यथादृष्टं श्रीनिवासविमानार्चाविग्रहादिकं स्थापयामासेत्यपि प्रतिपाद्यते ॥ ८४ ॥ यथो क्तं तत्र ॥ यथादृष्टं विमानं ते मद्रूपं पुरुषर्षभ ॥ तथा कुरु महाभाग तेन ते भविता गतिः ॥ इ त्युक्त्वांतर्दधे देवः सर्वेषामेव पश्यताम् ॥ तेनोक्तमार्गेण विधाय पुण्यं विमानवर्यं प्रतिमां च पु ण्याम् ॥ प्रख्याप्य शंखो नरलोकसंघे जगाम विष्णोः पदमव्ययं शुभमिति ॥ ८५ ॥ अस्य श्रीनिवासदेवस्य शंखचक्रवरमुद्राकटिविन्यासरूपचतुर्विधचिह्नधारिचतुर्भुजत्वं श्रीदेवीश्री वत्सांकितवक्षस्कत्वं च तत्रतत्र प्रतिपाद्यमानं दुरपह्नवं देवतांतरव्यावर्तकं चिन्हम् ॥ ८६ ॥

अत एव हि परमैकांत्यग्रेसरैः श्रीपरांकुशपरकालादिदिव्यसूरिभिरितः सुबहुकालात्प्राचीनै द्राविडवेदतदंगोपांगरूपेषु दिव्यप्रबंधेष्वयं देवो विष्णुरितीदं क्षेत्रं वैष्णवक्षेत्रमिति चाऽनुसंधायैतस्य स्तवनादिरूपमुपासनं क्रियमाणं दृश्यते ॥ नचैते विरक्ताग्रेसरा अस्य देवस्य वस्तुतो देवतांतरत्वेपि कथं चित्तत्र विष्णुत्वमारोप्यापि वा कृत्रिमामुपासनभावनां कुर्युः ॥ ८७ ॥ न चाऽऽमुष्मिकपारमार्थिकप्रवृत्तियुक्तानां सकलबाह्यविषयव्यापारविमुखानाममीषामीदृशाथ प्रतिष्ठादिकामनामूला प्रवृत्तिः कथंचिदपि संगच्छते ॥ ८८ ॥ नच तेषां स्तवनोपासनादिकं वराहभगवन्मात्रविषयं व्यवस्थापयितुं शक्यं दीर्घतरमहाकिरीटधारित्वशंखचक्रधरत्वश्रीदेव्यधिष्ठितवक्षस्कत्वावयवसंनिवेशविशेषादीनां श्रीनिवासासाधारणचिह्नविशेषाणां वराहभगवद्व्यावृत्तानामनुसंधानदर्शनात् ॥ ८९ ॥ श्रीपरांकुशदिव्यसूरिणा द्राविडब्रह्मसंहितायां श्रीवेंकटाचलविषययोस्तृतीयशतकतृतीयदशकषष्ठशतकदशमदशकयो र्मध्ये चर्मनिर्दिष्टे दशके श्रीनिवासभगवदसाधारणचिन्हजातमपि सम्यगभिहितम् ॥ ९० ॥ तत्र हि द्वितीयगाथायां दक्षिणपाणौ प्रज्वलत्सुदर्शनधरत्वं तदुपलक्षितमन्यदायुधजातं च दशमगाथायां पद्मालयानित्याधिष्ठितवक्षस्कत्वं निगमगाथायां प्राप्यप्रापकत्वेन निजचरणकमलयुगलप्रदर्शयि

त्वद्दक्षिणपाणिमुद्रां निजचरणकमलाश्रितानां संसाराब्धेर्जानुदघ्नत्वप्रदर्शनमुखेन समुज्जीव
नसंदर्शयितृवामोरुसंलग्नवामहस्तमुद्रां च भगवतः श्रीनिवासदेवस्य प्राकाशयद्भगवान्श्री
परांकुशदिव्यसूरिः॥९१॥ यथोक्तं तत्र द्वितीयगाथायां ॥ कुपितप्रज्वलच्छ्रीमन्नेमिदक्षिणपार्श्वे
ति दशमगाथायां वियोक्तुमसमर्थास्मि क्षणमपीत्यनुसंधाय पद्मोर्ध्वकुमारीनित्याधिष्ठितवक्ष
स्थलेति निगमगाथायां चरणाधस्तादनुरूपं निविश्य हे दासा वर्धध्वमित्येवंकृपांदिशंतमनुप
मप्रकारं स्वामिनमिति च॥९२॥अत्र निगमगाथायां चरणाधोनिवेशस्य ततः समुज्जीवनस्य च
प्रदर्शनात् ततो भगवतः सकलेतरव्यावृत्तानुपमप्रकारत्वस्य चाऽभिधानात् दक्षिणवामपाणि
गतमुद्राद्वयमभिहितं द्रष्टव्यम्॥९३॥एवमन्यान्यपि लक्षणानि तत्तद्दिव्यसूरिभिरनुसंहितानि
द्रष्टव्यानि ॥९४॥ अत्र भगवतोवामहस्तस्य कटितटोरुसंधिन्यस्तस्य मुद्रायाः क्वचिद्भवजल
धेजानुदघ्नताप्रदर्शनपरत्ववर्णनं दूरतोपि दिक्प्रदर्शनविधया तथा सूचनं संभवतीत्याभिप्रायकं
बोद्धव्यम् ॥ ९५॥ तस्माच्छ्रीनिवासविषयं स्तवनोपासनादिकं दिव्यसूर्यकृतमप्यत्रप्रबलतरं
प्रमाणमेव॥९६॥अस्य श्रीनिवासभगवतः शंखचक्राद्यायुधविहीनपाणिकत्वं तु तोंडमांश्चक्रव
र्तिने दुर्विषहवैरिनिषूदनकांक्षिणे निजायुधदानसूचकं भगवतैव संकल्पमिति पुराणवचने ष्वे

व स्पष्टं ॥ १७ ॥ ब्राह्मपुराणे सप्तमाध्याये॥दर्शयन्भक्तवात्सल्यं यो ददौ हस्तगे शुभे ॥शंखच
क्रे नृपेंद्राय चक्रवर्तीति यं विदुः॥अत एवारिशंखाभ्यां दृश्येते रहितौ करौ॥अर्चारूपशिलारू
पविग्रहस्य महात्मन इति शंखचक्राराहित्यकारणकथनं प्रस्तुत्य ततोऽध्यायांते ॥ स्थिते
कदाचित्क्षितिपे श्रीनिवासस्य संनिधौ ॥शत्रवश्च बलोद्रिक्ता रुरुधुस्तस्य वै पुरीं॥श्रुत्वा बला
र्णवं घोरमायांतं नादशंकितः॥योद्धुकामो जगामाथ पुनस्तैश्चपराजितः॥ततः खिन्नमना भूत्वा
तमेव शरणं ययौ ॥ बिलद्वारेण देवेशं गत्वा पादौ प्रगृह्य च ॥ रुरोद त्राहि त्राहीति तं प्राहार्चा
स्वरूपवान्॥माभैषीः पुत्र भद्रं ते चक्रशंखौ ददामि ते ॥ ताभ्यां गच्छ पुरीं स्वीयां तौ ते शत्रून्
हनिष्यतः॥इत्युक्त्वा तौ ददौ तस्मै ताभ्यां सह जगाम सः॥तौ च शत्रून्विहत्याशु कृत्वा राज्यम
कंटकं॥आजग्मतुः क्षितिभृता साकं देवस्य संनिधौ॥राजा देवं ववंदेऽथ स्तुत्वा स्तोत्रैरनेकशः
वरं वरय भद्रेति देवो राजानमब्रवीत् ॥ ॥ राजोवाच ॥ ॥ ममायुधप्रदानस्य ख्यात्यै
देवोत्तम प्रभो ॥ अर्चाबिंबे शिलाबिंबे चक्रशंखौ न धारय ॥ इति संप्रार्थितो देवो न दधार पुन
श्चतौ ॥ अदृश्यौ तिष्ठतश्चोभौ पार्श्वतः शार्ङ्गधन्वनः इत्यंतेन शंखचक्राराहित्ये कारणं सवि
स्तरं निरूपितम् ॥ १८ ॥ अत्र भक्तविषये प्रदर्शितनिजमहौदार्यस्मारकतया दिव्यायुधधार

णं सर्वलोकदृग्गोचरतया न कर्तव्यमित्येतावन्मात्रस्यैव चक्रवर्तिप्रार्थिततया तथाधारणाभावे
पि सर्वदास्वासाधारणनित्यसिद्धदिव्यायुधसंनिधानमस्त्येवेति दर्शितम् ॥ ९१ ॥ एवं ब्रह्मां
डपुराणे एकादशाध्यायेऽपि श्रीभगवान् ॥ शंखचक्रे प्रदास्यामि भाविसायुज्यसूचके ॥ तथा
कौमोदकीं शार्ङ्गं नंदकं च महामते ॥ पंचायुधधरो भूत्वा दुरात्मानं सुरद्रुहम् ॥ सबंधुवर्गं सामा
त्यं जहि संग्राममंडले ॥ इत्युक्त्वा प्रददौ तस्मै शुचये चक्रवर्तिने ॥ शंखचक्रगदाशार्ङ्गखड्गानि म
धुसूदन इति सिंहादाख्यासुरवधार्थं चक्रवर्तिने भगवता पंचायुधदानं प्रतिपाद्य ततोऽध्यायांते
ततः सिंहादसंहारी चक्रवर्ती महीपतिः ॥ व्यजिज्ञपत्स्ववृत्तांतं वेंकटेशाय सर्वतः ॥ शंखचक्रगदा
शार्ङ्गनंदकान्नृपनंदनः ॥ अर्पयामास हरये वेंकटाद्रिनिवासिने ॥ राजानं च तथा पंचायुधान्य
पि च माधवः ॥ उवाच मेघनिर्घोषगंभीरिमभृता गिरा ॥ राजन्यदीच्छसि जयमजेये सांपरायि
के ॥ तदिमान्यायुधान्युच्चैः साहाय्यं कुर्वतां तवेत्यादिना सिंहादवधानंतरं चक्रवर्तिना प्रत्यर्प्य
माणानां दिव्यायुधानां तत्तत्कालसाहाय्यार्थं चक्रवर्तिसंनिधान एवाऽवस्थानं नियम्य स्वस्य
किंचित्कालपर्यंतं प्रत्यक्षविगतायुधत्वं दिव्यायुधानां माननमात्रसंनिधानं चाऽभ्युपगम्य त
तः किंचित्कालानंतरं कलौ विमानादीनामिव दिव्यायुधानामपि भक्तकल्पितानामंगीकारं

लोकतुष्टये कुर्वन् वर्तिष्य इति चक्रवर्तिनं प्रति भगवतैवाऽभिधानप्रतिपादनाद्भगवतोऽस्य श्रीनिवासदेवस्य स्वासाधारणदिव्यायुधराहित्यमद्योपपद्यते ॥ १०० ॥ न चेत्थं स्कंदस्य स्वासाधारणायुधप्रहाणकारणमेवंभूतस्य तस्याऽर्चारूपेण स्थापनं वा पुराणे क्वचित्प्रतिपादितम् ॥ १ ॥ तस्मान्नासौ स्कंदशंकागंधार्हो देवः ॥ २ ॥ यदपि वादिनो मन्यंतेऽस्य देवस्य श्रीवैष्णवैराराध्यमानतादशायामपि प्राचीनसंप्रदायानुसारेण देवतांतरासाधारणैर्बिल्वपत्रैरर्चनं क्वचिन्मासे क्रियमाणमद्याप्यनुवर्तमानं दृश्यते तदिदं तस्य देवतांतरत्वसाधकं लिंगमित्यस्य देवस्य विष्णुरूपत्वे तदसाधारणदिव्यायुधराहित्यं देवतांतरासाधारणं जटिलत्वं नागाभरणधारित्वं च दृश्यमानं न कथंचिदप्युपपद्यत इति च ॥ ३ ॥ तदप्येतेन निरस्तं प्रत्यक्षदिव्यायुधराहित्यकारणस्य यथोक्तरीत्या पुराणएव सम्यक्प्रतिपादितत्वात् परःशतेषु स्थानेष्वस्य देवस्य श्रीवैकुंठनाथः श्रीमहाविष्णुरेव श्रीनिवासाख्यावतारविशेषरूपतायां साक्षादभिधीयमानायां लिंगेन श्रुतिबाधनायोगाच्च ॥४॥ अस्य देवस्यप्रागुदाहृतप्रमाणगणगता विष्णुत्वश्रुतिरन्यथासिद्धिगंधानर्हा विद्यत इति प्राक्तननिरूपणेनैव विशदम् ॥ ५॥ लिंगं चेदमन्यथासिद्धं बिल्वपत्रार्चनादीनां देवतांतरासाधारणत्वस्याऽप्रामाणिकत्वात् ॥ ६॥ तुलसीदेव्य

भिमतमत्वेन तुलसीदलानां भगवदभिमतत्ववत् बिल्ववृक्षस्य श्रीदेव्यभिमततया बिल्वपत्राण्यपि भगवदभिमतान्यर्चनोपकरणानि शास्त्रसिद्धानि ॥ ७ ॥ बिल्ववृक्षस्य श्रीदेव्यभिमतवृक्षत्वं च ॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्व इति श्रीसूक्तश्रुतिसिद्धं॥८॥ततो बिल्वपत्रैरपि भगवदर्चनं तत्रतत्र शास्त्रैर्विधीयते ॥९॥ यथोक्तं हारीतस्मृतौ विशिष्टपरमधर्मशास्त्रे पंचमाध्याये धनुर्मासार्चनघट्टे ॥ कोदंडस्थे दिनकरे तस्मिन्मासि निरंतरम् ॥ अरुणोदयवेलायां प्रातःस्नानं समाचरेत् ॥ तर्पयित्वा विधानेन कृतकृत्यःसमाहितः॥नारायणं जगन्नाथमर्चयेद्विधिवद्द्विजः ॥ पौरुषेण विधानेन मूलमंत्रेण वा यजेत् ॥ शतपत्रैश्च जातीभिस्तुलसीबिल्वपुष्करैः ॥ गंधैर्धूपैश्च दीपैश्च नैवेद्यैर्विविधैरपि ॥ पायसान्नं शर्करान्नं मुद्गान्नं सघृतं हविः ॥ सुवासितं च दध्यन्नमपूपान्मधुमिश्रितान् ॥ मोदकान्पृथुकाल्लाजाञ्छष्कुलीचणकानपि ॥ विविधानि च भक्ष्याणि फलानि च निवेदयेदिति ॥ ११० ॥ एवं तस्मिन्नेवाध्याये ततः पूर्वत्र ॥ लक्ष्मीनारायणं देवं भार्गवे वासरे निशि ॥ अखंडबिल्वपत्रैश्च कोमलैस्तुलसीदलैः ॥ अर्चयेन्मंत्ररत्नेन वामांकस्थश्रिया सहेति ॥ अखंडबिल्वपत्रैर्वा पद्मपत्रैर्घृतेन वा ॥ श्रीसूक्तपुरुषसूक्ताभ्यां प्रत्यृचं जुहुयात्तत इति ॥ गोपालवपुषं कृष्णमर्चयेच्छ्रद्धयान्वित इत्यारभ्य

करवीरैः कोविदारैर्बिल्वै रास्फोटकैरपि॥दशाक्षरेण मंत्रेण पूजयेत्पुरुषोत्तमिति॥नृसिंहवपुषं देवं पूजयेत्तद्विधानतः ॥ मंत्रराजेन गायत्र्या मूलमंत्रेण वा यजेत् ॥ अखंडबिल्वपत्रैश्च जाति कुंदैश्च यौथिकैरिति चोक्तम् ॥ ११ ॥ एवं श्रीवेंकटाचलमाहात्म्यपरश्रीवाराहपुराणप्रथम भागेऽपि पंचचत्वारिंशांकचिन्हिते त्रयोदशाध्याये दशरथस्य श्रीनिवासाविर्भावमुद्दिश्य स्वामिपुष्करिणीतीरे तपः कुर्वतां महर्षीणां चरित्रदर्शनसमये ॥ अर्चयंति जगन्नाथं तथा बिल्वदलैरपि ॥ तुलस्याः सुदलैश्चापि कृष्णश्वेतैश्च योगिन इत्युक्तम् ॥ १२॥ श्रीवेंकटाचलमाहात्म्यपरवाराहपुराणद्वितीयभागेऽपि नवमाध्याये देवकृतलक्ष्मीस्तोत्रे॥ नमो बिल्ववनस्थायै विष्णुपत्न्यै नमोनम इत्यनेन स्तोत्रप्रीतिश्रीमहालक्ष्मीप्रतिवचनेपि अखंडैर्बिल्वपत्रैर्मामर्चयंति नरा भुवि ॥ स्तोत्रेणानेन ये देवानरा युष्मत्कृतेन च ॥ धर्मार्थकाममोक्षाणामाकरास्ते भवंति वै ॥ इत्यनेन च वचनेन श्रीदेव्या बिल्वप्रियत्वस्य तैरेव साक्षात् बिल्वपत्रैः स्वार्चनविधानस्य च प्रतिपादनात् भगवतः श्रीनिवासस्य श्रीदेव्या नित्याधिष्ठितवक्षसो बिल्वपत्रैरर्चनं हि सुसंगतम् ॥ १३ ॥ एवमन्यदपि बिल्वपत्रैर्भगवदर्चनप्रतिपादनपरं बहुलतरं तत्रतत्र स्थितं वचनजातमत्रोपष्टंभकं द्रष्टव्यम् ॥ १४ ॥ इत्थं श्रीदेव्या भगवतो विष्णोश्च बिल्वप्रियत्वस्य बि

त्वद्दलैरर्चनविधानस्य च प्रमाणसिद्धत्वेन तदनुरोधेनैवेह तथार्चनानुष्ठानसंप्रदायागमात् अन्यत्रापि विष्णुस्थलेषु क्वचित्क्वचित् बिल्वपत्रार्चनस्याऽधुनापि दृश्यमानत्वाच्च नानेनायं देवो देवतांतरीकर्तुं शक्यः ॥ १५ ॥ अथ नापि जटिलत्वं देवतांतरासाधारणं विष्णोरप्यवतारेषु क्वचित्क्वचित् तत्सद्भावस्य प्रमाणप्रतिपन्नत्वादिहापि तत्संभवे बाधकाभावात् ॥ १६ यथोक्तं श्रीभागवतैकादशस्कंधे भगवद्धर्मनिरूपणपरे निमिनवयोगीश्वरसंवादे पंचमाध्याये करभाजनयोगीश्वरवचने ॥ ॥ राजोवाच ॥ ॥ कस्मिन्काले स भगवान्किंवर्णः कीदृशो नृभिः ॥ नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ ॥ करभाजनउवाच ॥ ॥ कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ॥ नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥ कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलांबरः ॥ कृष्णाजिनोपवीताक्षान्बिभ्रद्दंडकमंडलू ॥ मनुष्यास्तु तदा शांता निर्वैराः समदर्शिनः ॥ यजंति तपसा देव शमेन च दमेन च ॥ हंसः सुपर्णो वैकुंठो धर्मो योगीश्वरोऽमलः ॥ ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयत इत्यादि ॥ १७ ॥ अत्र तत्तत्कालेष्विच्छानुरोधेन भगवतो नानाविधवर्णायुधाकारनामाविशिष्टरूपधारित्वं तत्तदवतारेषु तत्तद्वर्णायुधाकारादिविशिष्टवेषेणैव समाराध्यत्वं चाभिधाय कालविशेषे जटिलत्वाद्याकारवि

शिष्टरूपशालिनो भगवदवतारविशेषस्य ताद्रूप्येण समाराध्यत्वाभिधानादिहापि श्रीनिवा
सारूयभगवदवतारविशेषे दृश्यमानजटिलत्वचतुर्बाहुत्वाद्याकारविशिष्टदिव्यरूपशालिनोभ
गवतस्तथैव समाराधनीयत्वं युक्तं संभवति ॥ १८॥ एवं पांचरात्रे सात्वतसंहितायां द्वादशे वि
भवदेवताध्यानपरिच्छेदे पातालप्रभृतिसर्वलोकस्थितसकलविभवदेवताध्येयाकारप्रतिपाद
नपरे प्रथमं पातालनिलयस्य संकर्षणमूर्तेर्भगवतोऽनंतस्य नानाविधाकारशालिनो वि
द्याधिदेवाकारवर्णने ॥ विद्याधिदेवं भगवंश्चतुर्वक्त्रं चतुर्भुजं ॥ लंबकूर्चजटादंडकमंडलुवक्षसू
त्रकं ॥ फुल्लरक्तांबुजाभासं श्वेतपद्मकरांकितम् ॥ श्रुतीर्ऋगाद्यावक्त्रेभ्यःप्रोद्गिरंतमनुस्मरेदिति॥
तत्रैव किंचिद्दूरत उपरिष्टात् नरनारायणहरिकृष्णरूपचतुर्विधभगवदवतारेषु कृष्णारूया
वतारस्वरूपवर्णने च ॥ कृष्णमिंदीवरश्यामसूर्ध्वबाहुं जटाधरम् ॥ पादेनैकेन तिष्ठंतमाहरंतं
च मारुतम् ॥ एकत्रिषट्द्विषट्रात्राद्यतिकृच्छ्रपरायणम् ॥ पक्षमासोपवासांश्च दिशंतमनुचिंतये
दिति ॥ तत्रैव पुनर्धरातलस्थितावतारांतरध्येयाकारनिरूपणे ॥ ध्यायेद्वराश्वगंतं वै तनुत्राढ्य
तविग्रहम् ॥ सितोष्णीषललाटं च नातिदीर्घजटाधरम् ॥ द्रवत्कनकवर्णाभमिषुधिद्वयमध्यगम्
शरचापकरव्यग्रं खड्गकुंतकुठारिणम् ॥ यज्ञाध्ययन दानादि परिरक्षंतमेव हि ॥ शातयंतमव

र्णानामधर्मनिरतात्मनाम् ॥ सर्वतत्त्वाश्रयं तत्त्वं सर्वशक्तिमयं विभुम् ॥ सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जितम् ॥ निःशेषभुवनानां च ध्यातव्यं च धरास्थितम् ॥ अनंतशयनाभूषं कल्पांतहुतभुक्प्रभम् ॥ ज्वलज्ज्वालावलीयुक्तं ज्वलनांशुकवेष्टितम् ॥ चक्राद्यायुधवृंदेन मूर्तेन परिवारितामिति चोक्तम् ॥ १९ ॥ इत्थमनेकेषु भगवदवतारेषु जटाधरत्वसद्भावावगमेनाऽस्यापि श्रीनिवासभगवतः तत्सद्भावो न विरुद्ध इति ॥ नैतेनासौ देवतांतरीभवितुमर्हति ॥ १२० ॥ किंचात्रोदाहृतसात्वतसंहितावचनासिद्धचरमरूपस्वरूपस्वभावपर्यालोचने तद्रूपस्य श्रीनिवासभगवद्रूपस्य चाऽत्यंतसादृश्यावगमेन तदेवेदमितिप्रत्यभिज्ञाकरमप्यस्ति भगवतःश्रीनिवासस्य पुराणप्रतिपन्नं दिव्यरूपम् ॥ २१ ॥ अत्राध्याये त्वराश्वगमित्याद्युक्तमश्वगामित्वादिलक्षणं श्रीनिवासस्यापिदृश्यते ॥ २२ ॥ यथोक्तं श्रीवराहपुराणद्वितीयभागे चतुर्थाध्याये पद्मावतीविवाहोपोद्घातमृगयाविहारघट्टे ॥ एतस्मिन्नंतरे चासौ ददृशुर्हयमुत्तमम् ॥ अकलंकेंदुधवलं जांबूनदपरिष्कृतम् ॥ स्फुरद्विद्युल्लतायुक्तशरन्मेघमिवोन्नतम् ॥ तस्मिंस्तु पुरुषं कृष्णं मदनाकारवर्चसम् ॥ पुंडरीकदलाकारकर्णांतायतलोचनम् ॥ सुसूक्ष्मक्षौमसंवीतनीलचूलिकयोज्ज्वलम् ॥ पद्मरागमणिज्योतिस्फुरत्कुंडलमंडितं ॥ सुवर्णरत्ननियतशार्ङ्गदिव्यधनुर्धरम् ॥ अपरेण

करेणैव वहंतं कांचनं शरम् इति ॥ २३ ॥ अत्र ददृशुर्हयमित्यादिनाश्वगामित्वं ध्यायेद्वराश्वगमित्यत्र उक्तमभिहितम् ॥ १ ॥ सितोष्णीषललाटं च नातिदीर्घजटाधरमित्युक्तमुष्णीषजटाधरत्वं अत्र सुसूक्ष्मक्षौमसंवीतनीलचूलिकयोज्वलमित्यनेनाभिहितं ॥ २॥ शरचापकरव्यग्रमित्युक्तं शरधनुरधरत्वमत्र सुवर्णरत्ननिचितशार्ङ्गदिव्यधनुर्धरं अपरेण करेणैव वहंतं कांचनं शरं इत्यनेनाभिहितम् ॥ ३ ॥ अतोऽत्र रूपद्वयानुरूप्यमवगम्यत इतिबोध्यम् ॥ ॥ २४ ॥ भविष्योत्तरपुराणेप्युक्तं षष्ठाध्याये यथोक्तमृगयाविहारघट्ट एव ॥ स कदाचिद्रमेशस्तु चिंतयामास वै हयम् ॥ मनसा चिंत्यमाने तु हयः प्रत्यक्षतां गतः ॥ वायुरश्वत्वमापन्नो रज्जुतत्त्वाभिमानिनी उपासर्पत्स्वयं लक्ष्मीस्ततोश्वं तं स पूज्य च ॥ तस्योपरि समातिष्ठत्सर्वाभरणभूषित इति ॥ १ ॥ कबरीकृतकेशेषु रक्तवस्त्रं सुवेष्ट्य च ॥ लंबितैः पुष्पजालैश्च स्कंधगैःपरिभूषितः ॥ सुवर्णरत्नसंबद्धपादुकागूहितांघ्रिकः ॥ धनुर्बाणधरः श्रीमान्साक्षान्मन्मथमन्मथः ॥ एवं मनोहरं रूपं धृत्वा श्रीवेंकटेश्वरः ॥ हयं रत्नसमाकीर्णैः उपबर्हैर्विभूषितम् ॥ सुवर्णतिलकोल्लासिवक्त्रं वायुमनोजवम् नीलवर्णं पांडुपादं हस्तपंचदशोन्नतम् ॥ आरुह्य देवमण्यादिसर्वलक्षणसंयुतं ॥ अवरुह्य गिरिश्रेष्ठान्मृगयार्थं जगाम स इति च ॥ २५ ॥

अत्रापि श्रीनिवासस्य हयगामित्वं स कदाचिद्रमेशस्तु चिंतयामास वै हयमित्यादिना हयं र
त्नसमाकीर्णैरित्यादिना चाभिहितम् ॥ १ ॥ कबरीकृतकेशेषु रक्तवस्त्रं सुवेष्ट्यचेत्यनेन उ
ष्णीषजटाधरत्वं धनुर्बाणधरः श्रीमानित्यनेन शरचापकरव्यग्रत्वं चाऽभिहितम् ॥ २ ॥ प्रा
गुदाहृतवराहपुराणघट्टेऽस्मिन्घट्टे च उभयत्र मृगयुवेषानुगुणधनुःशरधरत्वाभिधानात्तदपे
क्षितं कवचतूणीरधरत्वमपि विवक्षितमेवेति प्रागुदाहृतसात्वतसंहितावचनेषु दृष्टं तनुत्रावृतवि
ग्रहत्वमिषुधिद्वयमध्यगत्वं चाभिहितप्रायमेव ॥ ३ ॥ अतो दर्शितरूपद्वयसाम्यं स्फुटतरमेवे
ति बोध्यम् ॥ १२६ ॥ यद्यपि दर्शितवराहपुराणघट्टे अकलंकेन्दुधवलमिति हयस्य शुद्धधव
लवर्णकायत्वं सुसूक्ष्मक्षौमसंवीतनीलचोलिकयोज्ज्वलमिति भगवतः सितोष्णीषसंभृतजटाधर
त्वं चाभिहितं अत्र तु नीलवर्णं पांडुपादमिति हयस्य पांडुपादनीलवर्णकायत्वं कबरीकृतके
शेषु रक्तवेष्टं सुवेष्ट्य चेति भगवतो रक्तोष्णीषसंवृतजटाधरत्वं चाभिधीयत इति भेदोऽवगम्य
ते ॥ २७ ॥ तथापि प्रतिकल्पानुवर्तिचरित्रविशेषेषु कल्पभेदेन विद्यमान एव प्रधानांशतौ
ल्ये अवांतरविषयगतानीदृश वैचित्र्यं संभवत्येवेति ॥ २८ ॥ तन्निबंधन एव अथमीषद्भेदव्य
पदेश इति नैतावता प्रधानविषये वैषम्यमनुसंधातुं युक्तम् ॥ २९ ॥ किं चापौरुषेयेषु स्मृती

॥ २१ ॥

तिहासपुराणादिषु शास्त्रेषु तत्तच्छ्रोतृप्रवक्तृपरंपरासंवादमूलेषु प्रणयितृणां श्रवणानवधानमूलविषमप्रणयनाद्वा सावधानः श्रवणानामेव सतां तेषां आप्ततमत्वेन यथाश्रवणमेव प्रणयनेऽपि पुराणगततत्तत्संवादाकरप्रवक्तृश्रोतृपरंपराप्रवचनश्रवणानवधानविषमप्रवृत्तानां तत्तत्संवादानां यथाश्रुतमेव प्रणयनाद्वा एकस्मिन्नेव कल्पेऽपि दर्शितावांतरविषयवैचित्र्यसंभवोऽवर्जनीयः ॥ १३० ॥ उक्तहेतौ च स्मृतीतिहासपुराणादिपौरुषेयशास्त्रेषु सर्वत्रात्रैव श्रीवेंकटेश्वरश्रीवेंकटाचलमाहात्म्यपरेषु पुराणभागेषु च तत्तच्चरित्रेषु अवांतरविषयचरित्राणि बहूनि दृश्यंते ॥ ३१ ॥ तत्र सर्वत्र अनयैव दिशा सर्वत्र निर्वाहोऽनुसंधेयः ॥ ३२ ॥ एवं स्कंदपुराणांतर्गतप्रथमभागे दशमाध्यायस्थभगवदाविर्भावघट्टे ॥ दध्युर्नारायणं दिव्यं परमानंदविग्रहम् ॥ वाङ्मानसपथातीतं विश्रुतैश्वर्यभासुरं॥सहस्रनेत्रं सहस्रबाहुपादैः समन्वितम् ॥ तप्तकार्तस्वरनिभं स्फुरत्कांतिमनोहरं ॥ दंष्ट्राकरालं दुर्दर्शं वमंतं दहनच्छटाः॥कौस्तुभेन विराजंतं दधानमुरसि श्रियम्॥ अविचिंत्यमनाद्यंतं अत्यंतभयदायकम्॥प्रकाशयंतं ब्रह्मांडं सर्वमात्मनि सर्वगम् ॥ अगस्त्यशंखप्रमुखास्ते सर्वे हृष्टचेतसः॥ तमालोक्य जगन्नाथं भूयोभूयो ववंदिरे ॥ भ्रमंति लोकरक्षार्थमायुधानि तदा हरेः ॥ नित्यतेजोबलोपेताह्याजग्मुस्तं निषेवितुम् ॥

चक्रमर्कप्रभं दिव्यं गदा खड्गश्च नंदकः ॥ पुंडरीकं चोग्ररवः पांचजन्यः शशिप्रभः ॥ तदा ब्र
ह्मांडमखिलं पूरयामास निर्भरः ॥ पांचजन्यस्य निनदः सर्वासुरभयंकरः ॥ इत्युक्तम् ॥ ३३ ॥
अत्र वमंतं दहनच्छटा इत्यनेन प्रागुदाहृतसात्वतसंहितावचनेषु कल्पान्तहुतभुक्प्रभं ज्वल
ज्ज्वालावलीयुक्तं ज्वलनांशुकवेष्टितमिति उक्तं ज्वालामालाकुलत्वमभिहितम् ॥ १ ॥ तप्तका
र्तस्वरनिभं स्फुरत्कान्तिमनोहरमित्यनेन द्रवत्कनकवर्णाभमिति सात्वतवचनांशोऽप्यभिहि
तः ॥ भ्रमन्ति लोकरक्षार्थमित्यादिना मूर्तिमद्दिव्यायुधागमनप्रतिपादकेन चक्राद्यायुधवृन्दे
न परिवारितमिति सात्वतवचनोक्तोंऽशोऽभिहितः ॥ ३ ॥ तस्मादिहापि दर्शितसात्वतसंहि
तोक्तदिव्यरूपस्य श्रीनिवासरूपस्य च सारूप्यमेव अवगम्यत इति ध्येयम् ॥ ३४ ॥ यद्य
पि वराहपुराणद्वितीयभागस्थप्रागुदाहृतमृगयाविहारघट्टे तस्मिंस्तु पुरुषं कृष्णं मदनाकारव
र्चसमिति नीलवर्णत्वमभिधीयते इह तु रुक्मवर्णत्वमभिधीयत इति भेदोवगम्यते ॥ ३५ ॥
तथापि भगवतो दिव्यरूपस्य कनककान्तिप्रत्युप्तविजातीयनीलप्रभामनोहरमयूरग्रीवया वि
द्युत्प्रभाप्रत्युप्तनीलमेघेन च समानाकारभासुरतया कृष्णपिंगलाकारत्वेन श्रुतिपन्नतया च कृ
ष्णाभत्वेन रुक्माभत्वेन च निर्देष्टुं योग्यतया न विरोध इति बोध्यम् ॥ अत एव दर्शितस्का

न्दपुराणभगवदाविर्भावघट्ट एव भगवतो विरंचादिप्रार्थनया ज्वालामालाकुलभीषणाकारं परित्यज्य सौम्याकारप्रदर्शनसमये ॥ विमाने रत्नखचिते बभूव सुखदर्शनः॥चन्द्रबिंबाननः शान्तो नीलोत्पलदलद्युतिः ॥ इति नीलवर्णत्वमपि भगवतोऽभिहितम् ॥ ३६ ॥ एवं वामनपुराणभागेऽपि चतुस्त्रिंशांकचिन्हिते पंचदशाध्याये श्रीनिवासभगवदाविर्भावघट्टे कीदृशं वै हरेस्तस्य रूपमव्यक्तरूपिणः ॥ कियन्तो वा भुजास्तस्य कियन्ति वदनानि च ॥ कियन्तो वा धृतास्तेन तीक्ष्णाः प्रहरणास्तथा ब्रूहि तद्रूपसंस्थानं विश्वमूर्तेर्हरेर्मुने ॥ इत्यादिना तत्राविर्भूतं हरेर्दिव्यरूपं कीदृशमिति प्रश्नमुपक्षिप्यतत्समाधानप्रकरणे मूर्धजैः कुंचितैश्चापि नीलैर्मृदुतरैस्तथा॥लम्बमानैर्विनिष्क्रान्तैःकिरीटाच्छुभदर्शनात् ॥ प्रच्छाद्यमानवदनं मेघैरिव निशाकरं ॥ इत्यनेन भगवतो जटाधरत्वं॥करेषु तेषु संयुक्तास्तीक्ष्णप्रहरणास्तथा॥ज्वलंतश्च स्फुरंतश्च मिथिलेश चकाशिर इत्यनेन अनेकशतसाहस्त्राः कालाग्निसदृशप्रभाः॥नानाप्रहरणाघोराः संयुक्तास्तत्र बाहुषु ॥ भयदाः सुरशत्रूणां दैत्येन्द्राणां महौजसाम् ॥ सर्वगाः सर्वदेशेषु भक्तानामभयप्रदाः ॥ जाज्वल्यमानास्तेजोभी रूक्षकैः सौम्यकैरपि ॥ अकुर्वन्निष्प्रभौ सद्यश्चन्द्रसूर्यौ स्वरश्मिभिः ॥ इत्यनेन च रूक्षसौम्यद्विविधाकारभारिभगवद्विविधाकारानुगुणैः रूक्षसौम्यतेजः

शालिभिर्द्विविधाकारैर्नानाविधैरायुधैर्भूषितकरबाहुत्वाभिधानादस्य श्रीनिवासभगवतःस्थिति कर्तृत्वानुगुणसौम्याकारयोग्यदिव्यायुधधारित्ववत्संहारकर्तृत्वानुगुणभीषणाकारयोग्यशक्तिकुठारादिघोराकारायुधधारित्वमप्यभिहितं भवतीति शरचापकराग्रं खड्गकुन्तकुठारिणमिति सात्वतवचनोक्तांशश्चक्राद्यायुधवृन्देन मूर्तेन परीतमिति सात्वतवचनोक्तांशश्चदर्शितौ भवतः॥ ९॥ एवं प्रागुदाहृतस्कान्दपुराणघट्टवचनैः अस्मिन्नपि घट्टे ॥ तद्रूपमाश्चर्यमनेकवर्णं किरीटमालाभिरशेषमूर्तेः॥ व्यराजतादित्य इवान्तकाले स्वरश्मिमालाभिरनेकरश्मिः॥ तद्दीप्तवक्त्रं विमलं विशोकं जाज्वल्यमानं महता स्वतेजसा॥ अशोभताद्यं वपुरद्भुतेक्षणं युगान्तकालाग्निरिव प्रदीप्तं॥इत्यनेन अनुपदोदाहृतवचनान्तरैः॥ मृदुचारुकपोलैश्च कुण्डलैरुपशोभितमित्यारभ्य सौम्यं समुच्छ्रितोरस्कं समायतविलोचनम्॥दिव्यपितांबरधरं दिव्यगंधानुलेपनम्॥ दिव्यया वैजयन्त्या च सुस्कंधगतया तथा॥चकाशे तद्यथा मेघो विद्युन्मालाविराजत इत्यन्तैः वचनैश्च रक्षकत्वानुगुणसौम्याकारसंहर्तृत्वानुगुणरूक्षाकारयोः भगवतोऽभिधानात्प्रागुदाहृतसात्वतवचनेषु॥ यज्ञाध्ययनदानादि परिरक्षन्तमेव हि॥ शातयन्तमवर्णानामधर्मनिरतात्मनां॥इत्युक्तरक्षकत्वानुगुणाकारः॥कल्पान्तहुतभुक्प्रभं॥ज्वलज्ज्वालावलीयुक्तं ज्व

लनांशुकवेष्टितमिति उक्तसंहर्तृत्वानुगुणाकारश्च अभीहितौ भवतः ॥ २ ॥ एवमस्मिन्पुराणे पंचत्रिंशांकचिन्हिते षोडशाध्याये सप्तऋषिकृतश्रीनिवासभगवतः स्तुतौ ॥ सहस्त्रादित्य संकाशचक्रहस्ताय ते नमः ॥ शंखहस्ताय ते नित्यं नमो विष्णो महात्मने ॥ नमः किरीटिने नित्यं नमः कौस्तुभधारिणे॥नीलमेघप्रतीकाशवपुषे ब्रह्मणे नमः ॥ असिरत्नगदाचापशक्तितोमरपाणये ॥ प्रदीप्तायुधजालाय प्रदीप्तवपुषे नमः ॥ यज्ञेशाय नमस्तुभ्यं ज्वलत्कुण्डलधारिणे नमोऽस्तु पद्मनाभाय नमस्ते विश्वयोनये ॥ परावराणां पतये करालवपुषे नमः ॥ इति वचनैः भगवतः श्रीनिवासस्य रक्षकत्वानुगुणसौम्याकारसंहर्तृत्वानुगुणभीषणाकारतदुभयानुगुण सौम्यासौम्यलक्षणद्विविधाकारायुधजालशालित्वं सुस्पष्टमभिहितं अतोऽस्मिन्वामनपुराणेऽपि श्रीनिवासरूपस्य दर्शितसात्वतवचनयुक्तरूपैकरूप्यमेव प्रतिपाद्यत इत्यवगन्तव्यम् ॥ ॥ १३७ ॥ एवं पाद्मपुराणभागेऽपि षट्त्रिंशांकचिन्हिते तृतीयाध्याये पद्मसरोवरतीरे श्रीशुक महर्षिं प्रति श्रीनिवासभगवदाविर्भावघट्टे तपसा तस्य सर्वात्मा संतुष्टः पद्मलोचनः॥संहर्ता रक्षिता स्त्रष्टा भुवनानि चतुर्दश॥अनुग्रहीतान्तर्यामिनिग्रहीता निरन्तरः॥शंखचक्रगदांभोजराजत्करचतुष्टयः ॥ मुक्तातपत्रितानन्तसहस्त्रफणमण्डलः ॥ नागैरपि नवाकल्पैस्तपनीयम

यांशुकैः ॥ सुमनोभिर्दिव्यगंधैर्दिव्यालेपनचन्दनैः ॥ अलंकारांगमहिमस्मयमानमुखांबुजः इति वचनेषु मुक्तातपत्रितानन्तेत्याद्यर्थद्वयेन अनन्तशयनत्वनागभूषणत्वाविधानाद्दर्शितसात्वतवचनेषु अनन्तशयनाभूषमित्युक्तोंऽशोऽभिहितः ॥ १ ॥ अनन्तः शयनं क्रीडोपकरणसुखसुप्तिस्थानं आभूषा भूषणं च यस्य सोऽनन्तशयनाभूष इति विगृहीतेन अनन्तशयनाभूषशब्देन शेषशायित्वं शेषभूषणत्वं च ह्यभिधीयते ॥ २ ॥ एवमस्मिन्नेव पुराणे श्रीस्वामिपुष्करिणीतीरे श्रीशुकमहर्षिं प्रति श्रीनिवासभगवदाविर्भावघट्टे सप्तविंशांकचिन्हिते चतुर्थाध्याये ॥ कालकादंबिनीकान्ताकुंचितालकबंधन इत्यनेन जटाधरत्वं भोगिभोगोल्लसद्भुज इत्यनेन नागभूषणत्वं चाभिहितम् ॥ ३ ॥ एवं त्रयस्त्रिंशांकचिन्हिते दशमाध्याये स्वामिपुष्करिणीतीरे ब्रह्मादिस्तुतश्रीनिवासाविर्भावघट्टे ॥ स्तुत्यानया प्रसन्नोऽस्मिन्विमाने परमस्वराट् ॥ सहस्रादित्यसंकाशः सहस्रेंदुसमप्रभः ॥ सहस्रहुतभुक्प्रायो विख्यातविभवोदय इति श्रीनिवासभगवतः सौम्यासौम्यलक्षणद्विविधाकारवत्त्वमेवाभिहितमित्यत्रापि सात्वतोक्तरूपानुरूप्यमेवावगम्यते ॥ १३८ ॥ एवं भविष्योत्तरपुराणे एकादशाध्याये श्रीनिवासस्य पद्मावतीपरिणयघट्टे भगवतः श्रीनिवासस्य भूषणदानसमये नागभूषणयुग्मं च बाहुपूरादिकांस्तथेति शेषाद्रिवासि

नः शेषशायिनः शेषभूषणस्याऽस्य देवस्य शेषप्रीतिमत्त्वमनुसंदधता वियद्राजेन नागभूषण युग्ममपि दत्तमित्यभिधीयते ॥ ३९॥ भविष्योत्तररहस्याध्यायेऽशीतितमांकचिन्हितेऽध्याये पार्वतीं प्रति परमरहस्यसविमानश्रीनिवासभगवद्ध्येयाकारमपदिशतामहादेवेन॥इंद्रनीलमणिश्यामरमणीयाहिभूषणैः॥शंखचक्राभयानामभूषितैश्च भुजोत्तमैरिति॥१४०॥ यन्नामश्रुतिसारसांद्रजलधिस्थाने लसत्कौस्तुभः स्वाज्ञानांधतमिस्रदुःखहरणं मत्पुत्रसंजीवनं॥विश्वाभीष्टवरप्रदानफलदं भोगींद्रसद्भूषणं सर्वैश्वर्यनिदानमात्मवरदं श्रीवेंकटेशं भजे॥ इति च श्रीनिवासभगवद्दिव्यस्वरूपस्य नागभूषणालंकृतबाहुत्वमभिधीयते॥ आनामोऽत्रावनतिलक्षणकटितटविन्यस्तवामहस्तमुद्रा॥४१॥एवं ब्रह्मांडपुराणभागेद्वितीयाध्याये ॥ अथाह भगवाञ्छेषमाहूय पुरतःस्थितम्॥मेघगंभीरया वाचा हर्षोत्फुल्लविलोचनः ॥ ॥ श्रीभगवानुवाच ॥ अनंतमत्प्रियो लोके न त्वदन्योऽस्ति कश्चन ॥ तस्मान्मम प्रियं किंचित्कर्तव्यं भवतानघ ॥ श्रुतं हि भवता सर्वं नारदोदीरितं वचः॥ क्रीडासमुचिते देशे वस्तव्यमिति मे मतिः ॥ तत्र भूत्वा गिरिवरो भवान्वसतु भूतले ॥ त्वत्फणामंडलभुवि स्थातव्यं रमया सह ॥ ॥ शेषउवाच ॥ ॥ अनंतोऽहं महादेव स्थास्यामि गिरिरूपधृत् ॥ भवांस्तु रमया सार्धं मम सानुषु रंस्यतां ॥ इत्यादिना

धरातले ऽनंतस्यैव भगवत्प्रियतमस्य भगवच्चोदनेन भगवतो भोगोपकरणसुखसुप्तिस्थान भूतक्रीडाद्रिरूपेण परिणामाभिधानात् अनेनापिपुराणेन ॥ निःशेषभुवनानां च ध्यातव्यं च धरास्थितम् ॥ अनंतशयनाभूषमित्युदाहृतसात्वत ॥ संहितावचनोक्तांश एवाऽऽभिहितो भव तिअत्र शयनशब्दस्य भोगोपकरणसुखसुप्तिस्थानत्वेन क्रीडाद्रेरपि संग्राहकत्वाद्भगवत्क्रीडार्थं धरातले क्रीडाद्रिरूपेण परिणामस्य धरास्थितमित्येतत्प्रत्यभिज्ञापकत्वात्पाद्मपुराणभागे चतु स्त्रिंशांकचिन्हित एकादशाध्याये ॥ इत्युक्त्वा गरुडेशानमधिरुह्य रमासखः॥भोगिराजगिरिं ग त्वा स्वामिपुष्करिणीतटे ॥ रमते रमयैकांते रमणीये श्रियः पतिः ॥ इति गिरिरूपेण परिणत स्याऽनंतस्य तल्पवद्भोगोपकरणसुखसुप्तिस्थानताया एवाभिधानाच्च ॥ ४२ ॥ एवं ब्रह्मां पुराणांतर्गते श्रीवेंकटेशसहस्त्रनामाध्यायेपि कपर्दी कामहारीचेत्यनेन शंखवान्पंकजकरः कुं कुमांको जयांकुशः॥भोगीशकंकणःशंक्योनिःशंकःशंकिताखिल इत्यनेन शक्तियुङ्मौक्तिकस्र ग्वीत्यनेन च जटाजूटशंखांकुशशक्त्यायुधधारित्वं नागभूषणधारित्वं चाभिहितम् ॥ ४३ ॥ अने नापिद्विविधाकारानुगुणवेषभूषणायुधधारित्वप्रतिपादनपरेण यथोदितांश एवाऽभिहितः॥४४ यद्यपि कपर्दी कामहारीचेत्यत्र कपर्दिशब्दकामहारिशब्दयोःशिवपरतया तच्छरीरकपरमात्म

परत्वं शरीरवाचकानां शरीरवाचकत्वन्यायेन सुवचं तथाप्यत्र सहस्रनामपाठे बहूनामेतद्देवतावाचकशब्दानां पाठात्तत्रैवोक्तांशस्य प्रागविवक्षितत्वाद्वचनांतरैककंठेनेह जटाधरत्वपरताया अपि कपर्दिशब्दस्य संभवात् कामहारिपदस्य विषयसंगनिवर्तकपरत्वस्यापि संभवाच्च यथोक्ताभिप्रायकत्वमपि संभवदुक्तिकमेवाऽस्य वचनस्येति बोध्यम् ॥ ४५ ॥ इत्थं नागभूषणत्ववति भगवति वचनसिद्धत्वात् नानेनाप्यस्य देवतांतरत्वसिद्धिः ॥ ४६ ॥ तथा च बिल्वपत्रार्चनशंखचक्राद्यायुधराहित्यजटाधरत्वनागाभरणधारित्वरूपाणि देवतांतरत्वसाधकतया वाद्यभिमतानि लिंगान्यन्यथासिद्धानीतिसिद्धं ॥ ४७ ॥ किंच जटाजूटधरत्वनागभरणधारित्वयोः शंकर एव सद्भावप्रसिद्धिप्राचुर्येऽपि न तयोर्वाद्यभिमतस्कंदत्वसाधकता कथंचिदपि सुवचा ४८ इत्थं वाद्युक्तलिंगानामन्यथासिद्धत्वात् अस्मदुक्तानां लक्ष्मीवक्षस्कत्वश्रीवत्सांकत्वविन्यासविशेषप्रभृतीनामनंतानां लिंगानां साक्षान्नारायणत्वश्रुतेश्चाऽनन्यथा सिद्धत्वाच्च पूर्वोदाहृतसात्वतसंहितावचनोक्तलक्षणविजातीयपूर्वदिव्याकारशाली श्रीनिवासाभिधानो भगवान्नारायण एवासौ श्रीवेंकटेश्वरो न पुनः स्कंद इति सिद्धं भवति ॥ ४९ ॥ इदमत्रावधेयं एको ह वै नारायण आसीन्न ब्रह्मा नेशान इत्यादयो ह्यनंता उपनिषदः श्रीमन्नारायणमेव निखिलजग

दुत्पत्तिस्थितिलयकारणं तस्मादेव च ब्रह्मादीन्भिन्नभिन्नकार्यादिकृतान् भिन्नभिन्नस्वरूपस्वभावानुत्पद्यमानांश्च प्रतिपादयंति ॥ १ ॥ कारणेष्वविद्यमानानां गुणानां कार्यएव संक्रामो न क्वचिद्दृष्टचरः ॥ २ ॥ दृश्यंते च लोके कारणगता एव गुणाः कार्येषु संक्रामंतः ॥ ३ ॥ अतः कार्यगतैर्गुणैः शक्तिरूपेणापि वाऽवश्यमेव कारणगतैर्भवितव्यम् ॥ ४ ॥ इत्थं च निखिलजगद्बीजभूतस्य बहुभवनसंकल्पशालिनो भगवतो नारायणस्यैव निखिलजगदुत्पत्तिस्थितिलयकर्तृत्वशक्तिलक्षणस्वभावसंपन्नतया तस्मादेव तदुत्पन्नेषु सृष्टिसंहारादितत्तत्कार्याधिकृतेषु ब्रह्मरुद्रादिषु लेशतस्तत्तच्छक्तिसंक्रमणस्य वाच्यतया तत्तद्गतसृष्टिसंहाराद्यनुगुणसौम्यासौम्याकारतदनुगुणनानाविधायुधधारित्वादिलक्षणवेषमूलभूतस्तथाविधो वेषो मूलकारणे भगवति नारायणे क्वचिद्रूपेऽवश्यं दुरपन्हव एवोपगंतव्य इति सृष्टिस्थित्यनुगुणसौम्याकारतदनुगुणायुधधारित्वादिलक्षणवेषवत्संहर्तृत्वानुगुणघोराकारतदनुगुणजटाभीषणत्वसर्पभूषणत्वशक्तिपरश्वधाद्यायुधधरत्वादिलक्षणवेषोपि भगवति सुसंगत एव ॥ ५ ॥ द्विविधाकारवत्त्वं च श्रीनिवासभगवतोऽस्तीति तु प्रागुदाहृतवचनेष्वभिव्यक्तम् ॥ ६ ॥ निखिलजगदुत्पत्तिस्थितिलयकारणसर्वशक्तिमत्त्वं स्वस्यैव प्राधान्येनास्ति अन्येषु तु स्वस्मादेवले

शतस्तत्संक्रांतमित्येतदाविष्करणायैव तादृशरूपशालिनः स्वात्मनः प्रदर्शनं भगवता क्रियते ॥७॥अत एवोक्तं दर्शितसात्वतसंहितावचनेषु॥सर्वतत्वाश्रयं तत्त्वं सर्वशक्तिमयं विभु मिति॥८ अत एव च पाद्मपुराणषड्विंशांकचिन्हिते तृतीयाध्याये॥तपसा तस्य सर्वात्मा संतुष्टः पद्मलोचनः॥संहर्ता रक्षितास्त्रष्टा भुवनानि चतुर्दशेत्यारभ्य अहं प्रथमपूर्वाभिर्द्वात्रिंशत्कोटिशक्तिभिः॥ वैष्णवीभिः सेव्यमानो देवः पद्मसरस्तटे ॥ श्रीभूमिनीलासहितः प्रादुरासीत्परः पुमानित्यं तेन भगवतः सृष्टिस्थितिसंहारादिकर्तृत्वमभिधाय तन्मूलभूतानंतवैष्णवशक्तिसेव्यमानत्वमभिहितम् ॥ ९ ॥ लोकेतत्तत्कार्यानुगुणा तत्रतत्र स्थिता हि शक्तिर्वैष्णव एव॥ यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा॥ तत्तदेवावगच्छ त्वं मम तेजोंशसंभवमिति गीताशास्त्रोक्तन्यायात्॥एवं पाद्मपुराणसप्तविंशांकचिन्हितचतुर्थाध्यायेऽपि ॥ कदाचिद्भगवान्विष्णुः कारुण्यागण्यपुण्यधीः ॥ दर्शयन्सकलाँल्लोकान्साक्षादक्षिपथं गतः॥ दिव्यानंदमयाकारैर्गरुत्मच्छेषसैनिकैः ॥ पंचायुधैः परिकरैर्गणैस्तु कुमुदादिभिः॥ परिबर्हाभूषणान्यजिनवस्त्रांशुकानि च॥आयुधान्यप्रमेयानिदधानैर्ब्रह्मशक्तिभिः॥ शक्तिभिः शांकरीभिश्च सेव्यमानो मुदान्वितः॥श्रीभूमिनीलापूर्वाभिरपूर्वाकल्पभूतिभिः॥ महिषीभिर्मुदानंदमावहंतोभिरीशितुः॥मुमोद सह सर्वात्मा क्रीडाडं

बरडांभिक इति ॥ १० ॥ सर्वात्मत्वेन हेतुना भगवतः श्रीनिवासस्य सर्वविधपरिजनायुधपरिकरशक्तिसंसेव्यत्वमभिहितम् ॥ ११ ॥ एवमन्यदप्येतत्परं वचनजातं तत्रतत्र स्थितं द्रष्टव्यम् ॥ १२ ॥ इत्थं च भगवतः श्रीनिवासस्य संहारकर्तृत्वाभिव्यंजकक्रूराकारतदनुगुणजटाभीषणत्वनागभूषणत्वशक्तिपरश्वधाद्यायुधधारित्वादिलक्षणवेषस्य तेनैव हेतुनाऽन्यत्रापि तादृशाधिकारलेशस्य स्वायत्ततयैव संक्रमणमभिव्यंजयतस्तादृशवेषमात्रेण देवतांतरत्ववर्णनं न कथंचिदपि संभवदुक्तिकम् ॥ १३ ॥ दर्शितपाद्मपुराणभागवचनेषु ब्रह्मशक्तिभिः शक्तिभिः शांकरीभिश्च सेव्यमान इत्यनेन द्वात्रिंशत्कोडिशक्तिभिर्वैष्णवीभिः सेव्यमान इत्यनेन सर्वात्माक्रीडाडंबरडांभिक इत्यनेन च चतुर्मुखशंकरादितत्तदधिकारप्रयोजकस्तत्तदधिकारासाधारणाश्चतुर्मुखशंकरादितत्तद्देवतागता अंशा ऐश्वर्यविशेषप्रयोजकविशेषणरूपतया शक्तिशब्दवाच्या ये संति ते सर्वेऽपि सर्वजगज्जालबीजभूते भगवति नारायणे वर्तमाना एवतत्रतत्रलेशतः संक्रामंति ते च सर्वे अंशा वैष्णवा एव शक्तयस्ताश्च शक्तयो द्वात्रिंशत्कोटिसंख्याः संख्यातास्तासांसर्वासां शक्तीनां मूलकंदभूतंभगवतो नारायणस्याऽऽदिमं परमं दिव्यरूपमेवेदं श्रीनिवासरूपं तादृशं च रूपं लीलारसकेन स्वाश्रितानां स्वीयकृत्स्नमहिमप्रदर्शनकौतुकिना भगवतैव

कृपया दर्शितमिति सम्यगेव प्रतिपाद्यते ॥ १४ ॥ सर्वात्मेत्यत्र आत्मशब्दस्य स्वभावपरतया तत्तत्कार्यगतसर्वस्वभावसंपन्न इति वा मृदात्मकोघटइत्यादिष्विव आत्मशब्दस्य कारणपरतयासर्वकारणमिति वाऽर्थस्य विवक्षिततया पक्षद्वयेऽपि कार्यगतसर्वस्वभावमूलकंदभूताकरस्थानत्वमभिधीयते ॥ १५ ॥ वामनपुराणभागस्थचतुस्त्रिंशांकचिन्हिताध्यायांते च ॥ अशोभताद्यं वपुरद्भुतेक्षणं युगांतकालाग्निरिव प्रदीप्तमित्यनेन श्रीनिवासरूपं भगवतो नारायणस्याऽदिमं रूपमिति स्पष्टमुक्तम् ॥ १६ ॥ तदिदं सर्वमनुसंधायैव सरोयोगिभूतयोगिमहायोगिनामस्वादिमदिव्यसूरिष्वंतिमेन परमैकांताग्रेसरेण महायोगिनाम्ना दिव्यसूरिणा स्वीयद्राविडवेदसंहितायाम् ॥ ॥ पद्यम् ॥ ॥ लंबजटाद्राघीयः कोटीरे लोहपिंडचक्रे च ॥ श्लाघ्ये वेष्टितफणधरकांचनसूत्रे अहो विराजेते ॥ परितः प्रस्रुतनिर्झरवृंदे श्रीवेंकटाचले वसतः ॥ अस्मन्नाथस्योभावाकारावेकलक्षणोभूयः ॥ इति मूलरूपपरया त्रिषष्टितमगाथया स्फुटं प्रोक्तम् ॥ सर्वेषां च निदानं श्रीमन्नारायणःस एक इति ॥ १७ ॥ अत्र लोहपिंडशब्दः संहर्तृत्वाकारानुगुणशक्तिकुठारादिसर्वायुधोपलक्षणं चक्रशब्दश्च रक्षकत्वाकारानुगुणशंखनंदककौमोदकीशार्ङ्गादिभगवदसाधारणसर्वदिव्यायुधोपलक्षणमिति बोध्यम् ॥

॥ १८ ॥ यद्यपि शक्तिकुठारादिसंहर्तृत्वाकारानुगुणायुधजातादिलक्षणोऽसौम्यवेषोऽत्र भगवति नोपलभ्यते रक्षकत्वानुगुणश्च सौम्यवेष एव चोपलभ्यते तथापि विरिंचादिभिः प्रार्थितेन भगवता घोरवेषमुपसंहृत्य सौम्यवेषप्रदर्शनात्तस्यैव लोकरक्षणरूपैकत्वाच्च सौम्यवेषमात्रेण संप्रति सर्वदृक्पथगोचरः सामिंधे॥ दिव्यसूरिणा तु भगवन्निर्हेतुककृपापरिलब्धदिव्यचक्षुषा भगवता दिव्यरूपं यथावत्साक्षात्कुर्वता तथाऽभिहितमिति न विरोधः ॥ १९ ॥ घोरवेषमुपसंहरता भगवता तदंतःपातिनोर्जटानागभूषणयोः परं सौम्याकारतामापादितयोः सौम्यरूपेपि धारणं कृतम् ॥ २० ॥ निजवक्षःपीठभृगुपादताडनसमयविनिष्क्रांतकरवीरपुरगतनिजनित्यानपायिमहालक्ष्मीपद्मसरोवरपुनःप्रादुर्भावार्थं निजतपश्चर्याकरणांगततापसवेषानुकूलतया श्रीवेंकटाचले श्रीरामतारकमंत्रेण स्वात्मानमुपासीनयोर्वायुस्कंदयोरुपासनप्रेप्सितप्रदर्शनीयस्वीयश्रीरामवेषानुकूलतया कार्तयुगस्वीयप्रादुर्भावविशेषस्वभावानुकूलतया च जटाधरत्वं सर्वदा तल्पच्छत्रादिरूपेण संप्रति धरण्यां क्रीडाद्रिरूपेण च निजपरिचरणैकपरायणस्य क्रीडाद्रिरूपपरिणतनिजांगनित्यसंनिधानहेतुं प्रबलतपश्चर्यामपि कृतवतो निजांतरंगकिंकरस्य फणिराजस्य भूषणरूपेणापि धारणस्य तदीयपरमप्रीत्यनुकूलतया फ

णिराजभूषणत्वं च सौम्याकारतामापाद्य सौम्यरूपेपि स्थापितं न तु परित्यक्तमित्यवगम्यते ॥ २१ ॥ भृगुपादताडनसमयापयातलक्ष्मीपद्मसरोवरप्रादुर्भावादिवृत्तांतो भविष्योत्तरपुराणभागद्वितीयाध्याये पाद्मपुराणभागांतर्गतचतुस्त्रिंशांकचिन्हितैकादशाध्याये च द्रष्टव्यः ॥ ॥ २२ ॥ वामनपुराणभागे एकविंशांकचिन्हिते द्वितीयाध्याये ॥ इदानीं च महाभाग वायुरास्ते तपश्चरन् ॥ जपंश्च तारकं मंत्रं गणयन्नक्षमालया ॥ परात्परतरं राममर्चयन्विधिपूर्वकम् ॥ श्रीभूमिसहितं देवं चतुर्बाहुं किरीटिनम् ॥ शंखचक्रधनुर्बाणपाणिं नीलोत्पलद्युतिम् ॥ देवदेवं जगन्नाथमपरोक्षनिरीक्षितुम् ॥ सर्वप्राणात्मको वायुस्तपस्तीव्रं चरत्यहो ॥ इति वचनैर्वायोः श्रीरामतारकमंत्रोपासकत्वम् ॥ इति विज्ञापितः शंभुः पुत्रेणाक्लिष्टकारिणा ॥ विधिनाशु ततः प्रादान्मंत्रं तस्मै सतारकम् ॥ लब्ध्वा मंत्रं महादेवात्स्कंदः प्रीतोभवत्पितुरिति वचनेन स्कंदस्य श्रीरामतारकमंत्रोपासकत्वं च प्रसिद्धमवगम्यते ॥ २३ ॥ शेषस्य क्रीडादिरूपेण परिणतत्वभगवन्नित्यसंनिधानार्थतपश्चर्याकरत्वादिवृत्तांतो ब्रह्मांडपुराणभागद्वितीयाध्याये ब्राह्मपुराणभागद्वितीयाध्याये च सुव्यक्तः ॥ २४ ॥ भगवतः श्रीनिवासस्याऽऽदिमकृतयुगावतीर्णत्वं च वराहपुराणांतर्गतत्रयस्त्रिंशांकचिन्हितदशमाध्याये च सुव्यक्तम् ॥ २५ ॥ तस्माद्यथोक्त

जटाधरत्वभोगीशभूषणत्वबिल्वपत्रार्चनादिलक्षणः स्वामिपुष्करिणीदक्षिणतीरे विराजमानो
देवो यथोक्तानन्यथासिद्धप्रमाणं न्यायगणैः श्रीनिवासाभिधानः श्रियः पतिः श्रीवैकुंठनाथः
श्रीवैकुंठात् श्रीवेंकटाद्रिं लोकरक्षार्थमागतः स्कंदमहादेवादिसर्वदेवतांतरवंद्यमानदिव्यचर
णनलिनयुगलः श्रीमन्नारायण एव न पुनः स्कंदादिशंकागंधार्हो इति सिद्धं भवतीति ॥१५०॥
॥ पद्यम् ॥ ॥इत्थं यति राजस्य प्रगल्भवाणीप्रचारजर्झरिते॥श्रीवेंकटेशविषयस्कंदविवादे नृ
पोऽब्रवीच्छैवान् ॥ ५१ ॥ भोभोः शैवा यदिदं स्कंदकथातूलमंजनाद्रीशे ॥ आरोपितं भवद्भिर्मि
लितैर्महता श्रमेण सुचिरेण ॥ ५२ ॥ सर्वं तदेतदधुना भवत्कथातूलमंजसोच्चाल्य ॥ इति पति
वाणीझंझामारुतवेगेन यापितं क्वापि ॥ ५३ ॥ अद्य श्वो वा कथयत यद्यस्त्युचितं सदुत्तरं शै
वाः ॥ अविचारितरुचिरेण त्वलमलमाभासयुक्तिजालेन ॥ ५४ ॥ इत्थं सदसि तदानीं यादवरा
जेननिगदिताः शैवाः ॥ पर्यालोच्यान्येद्युःप्रतिवचनं दातुमभ्युपागच्छन् ॥ ५५॥ तदनु यतीशा
नमपि प्रत्यवदद्यादवक्षितीशानः॥ तदुदितसुनिपुणवाणीश्रवणेनात्यंतविस्मितस्वांतः ॥ ५६॥
भोभोः श्रीरामानुजयोगिन्नन्येद्युरथपुनर्भविता ॥ एतद्विचारशेषस्तदा समायातुमर्हसि त्वम
पि॥५७॥ इत्थं सदसि तदानीं समापिते यादवक्षितीशेन॥व्याघ्रभयादिव मुक्ता यतिराजभया

द्ययुः स्वगेहं ते ॥ ५८ ॥ अथ भगवाञ्छ्रीरामानुजयतिपुरंदरोऽपि राजानमनुमान्यसपरिवारः
स्वस्थानमागमत् ॥ ५९ ॥ इत्थं सदस्येषु सर्वेषु गतेषु यादवराजः सचिवैः सह श्रीरामानुज
योगिवैभवं निपुणतरं तदीयवादवैदग्ध्यं च सम्यगनुसंधाय विद्धहृदयस्तदीयमेव वादं न्याय्य
तरं विपरीतमेव चेतरेषां वादं मन्यमानः शिवो वा किंवदिष्यंति शैवा विचारयिष्याम इति चिंत
यन्नासीत् ॥ ६० ॥ ततोऽपरेद्युः सर्वे शैवा मिलित्वा स्वपक्षबलं सर्वमपि सम्यगालोच्य रा
ज्ञः सदसि स्वपक्षविजयनिराशकातरहृदयास्तथापि रुग्णस्य यावत्कंठगतप्राणं चिकित्सनी
य तान्यायेन यावच्छक्ति प्रतिवादः कर्तव्य एवेत्यनुसंदधानाः सभां समाजग्मुः ॥ ६१ ॥ ॥
पद्यं ॥ ॥ तदनु श्रीरामानुजमुनिरपि परिवारसहित उपयातः ॥ राज्ञाऽभिवंदितांघ्रिस्तस्मै वि
दधे च मंगलाशास्तिम् ॥ ६२ ॥ तदनु स राजसु सर्वेषु सभास्तारेषु सदसि समुपविष्टेषु समा
हितमनसः शैवा राजानमूचुः ॥ ६३ ॥ भोराजन्स्वामिपुष्करिणीदक्षिणतीरे विराजमानोऽयं
देवः स्कंदो वा महादेव एव वाऽथवाऽततो हरिहरावताररूपो वा भवितुमर्हति न पुनरयं
केवलविष्णुरूप इति तावद्वयं वदामः ॥ ६४ ॥ तत्र स्वामिपुष्करिणीदक्षिणतीराविर्भूतस्या
स्य देवस्य स्कंदत्वपक्षेऽपि न विष्णुलक्षणदर्शनप्रतिपादनविरोधः स्कंदस्य विष्णुकलांशमि

श्ररूपताया अपि वामनपुराणभागप्रतिपन्नतया तदनुरोधेन तदाविर्भावकाले विष्णुलक्षणभूतचक्राद्यायुधव्यंजने बाधकाभावात् ॥ ६५ ॥ वामनपुराणभागे चैकविंशांकचिन्हते द्वितीयाध्याये बृहस्पत्युक्तस्कंदोत्पत्तिक्रमघट्टे॥ मा विषाद महाबाहो देवसेनापतेग्रहणीः॥किं न स्मरसि चात्मानं वैष्णवं धाम शाश्वतमिति वचनेन ॥ सती च सा पर्वतराजकन्यका प्रवर्धते मेनकयोपलालिता ॥ तयैव संयोज्य च शंकरं विभुं सुरेश्वरं प्रार्थय तारकांतकम् ॥ विष्णोः कुलांशो भविता भगवान्नः सुखावह इति वचनेन बृहस्पतिकृतस्कंदस्तुतिघट्टे ॥ त्वां प्रपद्ये सुवर्णाभ शंकरात्मज शंकर ॥ त्वं विष्णुस्त्वं विधाता च त्वं रुद्रः कालरूपधृगिति वचनेन च स्कंदस्य विष्ण्वंशमिश्रत्वं ह्यवगम्यते ॥ ६६ ॥ एवं एकवक्त्रो द्विबाहुश्चेत्येकवक्त्रत्वदशायां द्विबाहुत्ववत् द्वादशहस्तविराजितहेते दुःपरामरवैरिहरेशेत्यनेन षड्वक्त्रत्वदशानुगुण्येन द्वादशबाहुत्ववत् चतुर्बाहुत्वमपि कामरूपस्यास्य संभवितुमर्हतीति न चतुर्बाहुत्वदर्शनाविरोधः ॥ ६७॥ अथवा महादेव एवायं भवितुमर्हति अस्यैव जटाधरत्वनागभूषणत्वादिप्रसिद्धिप्राचुर्याद्वैष्णवैर्निखिलजगन्मोहकारणत्वेनाभ्युपगते विष्णोः सर्वलक्षणोपपादनन्यायेनैवाऽस्माभिस्तथात्वेनाभ्युपगते महादेव एव सर्वलक्षणोपपादनसंभवाच्च ॥ ६८ ॥ किंच अस्य देवस्य ह

रिहरलक्षणेषु प्रतिपन्नेषु हरिलक्षणैरेनं हरिमेव स्वैरं ब्रुवाणेषु वैष्णवेषु हरलक्षणैरेनं हरमे
च ब्रुवाणानस्मान्वा को निरोद्धुं शक्ष्यति ॥ १६९ ॥ यद्वा हरिहरावताररूपएवायं देव उ
भयविधलक्षणदर्शनानुरोधात्प्रतिवाद्युदाहृततन्मतकूटस्थदिव्यसूरिप्रबंधगाथाप्रामाण्याच्च ॥
॥ १७० ॥ इत्थं च स्कंदपुराणप्रथमभागांतर्गताष्टमाध्याये ॥ ये स्मरंति महादेवं श्रीनिवा
सं विमुक्तिदम् ॥ कीर्तयंत्यथवा विप्रास्ते मुक्ताः पापपंजरादित्यत्र ॥ श्रीनिवासं महादेवं येऽ
र्चयंतिसकृन्नराः॥किं दानैः किं व्रतैस्तेषां किं तपोभिः किमध्वरैरित्यत्र॥ एवमन्येष्वपि कतिपय
श्लोकेषु श्रीनिवासमहादेवशब्दाभ्यामुभाभ्यामस्य देवस्य निर्देशाःसंगच्छंते ॥ ७१ ॥ एवं
पाद्मपुराणभागस्थसप्तविंशांकाचिन्हितचतुर्थाध्यायस्थैतद्देवाविर्भावघट्टे ॥ अष्टमींदुकलाधार
ललाटस्थोर्ध्वपुंड्रक इत्येतद्देवविशेषणमप्यस्य हरिहरावताररूपत्वसाधकं तत्र महादेवलक्षण
चंद्रशेखरत्वविष्णुलक्षणोर्ध्वपुंड्रधरत्वयोर्द्वयोरप्यभिधानात्तस्मादेतांस्त्रीनपि पक्षानतिक्रम्य के
वलविष्णुरूप एवायं देव इति प्रतिवादिपक्षो नांगीकर्तुं युक्तः॥ ७२॥ ॥पद्यम्॥ ॥इत्थं
शैवैरुक्तः प्रदर्शयद्भिर्बलं निजं सर्वम्॥अपजयकातरहृदयान्प्रति वाचमुवाच यादवनृपस्तान्॥
॥ ७३॥ भोभोःशैवा यूयं बहुलायासं किमर्थमाचरथ॥प्राच्यैस्तदुपन्यासैरिममपि वादं समाहि

तं मन्ये ॥ ७४ ॥ अतिगंभीरं रामानुजमुनिवादं पुरोदितं शृण्वन् ॥ को वा भवतां वादे प्रतिवच
नं दातुमक्षमो भविता ॥ ७५ ॥ भवतां वादः सर्षपघाटीमाटीकते तदीयस्तु ॥ घनगंभीरो वादः
सुमेरुगिरिणा समोन्नतो जयति ॥ ७६ ॥ अहमेवाद्यैवभवद्वादे प्रतिवचनदाननिपुणोऽस्मि ॥
एवमपि हरिहराकृतिवादे श्राव्यं ममास्ति किंचिदिह ॥ ७७ ॥ तत एनमेव रामानुजमुनिमह
मेष चोदयाम्यद्य ॥ तेनैव चोच्यमानं शृणोमि वचनं सुजातघाटोकम् ॥ ७८ ॥ इत्थं शैवान्प्रति
भाष्य स यादवराजः श्रीरामानुजमुने भवन्मुखादेवाऽस्यापि वादस्य समाधिमधिगंतुमिच्छा
मि तत्कथ्यतां समुचितमुत्तरमिति भगवंतं रामानुजमुनिमेव चोदयामास ॥ ७९ ॥ ततो भग
वान्रामानुजमुनिरपिप्रतिवचनमारचयामास ॥ १८० ॥ श्रीराजन्भवदीयहृदयशंकायां त
त्त्वपदवीदवीयस्यांदिष्ट्याविनिवर्तमानायां संप्रतीममनुवर्तमानमीषदंशं सुप्रभातायामपि र
जन्यां भास्करोदयादर्वागीषदनुवर्तमानमिव तिमिरांशं मन्ये ॥ ८१ ॥ श्रीराजन्यदेते वादि
नोमन्यंते स्कंदेपि विष्णवंशसद्भाववचनाद्विष्णुलक्षणदर्शनाविरोध इति कामरूपतया षड्बा
हुत्वचतुर्बाहुत्वस्यापि संभवेन तन्निर्देशाविरोध इति च ॥ ८२ ॥ तदत्यंतमसाधु यद्यद्विभूतिम
त्सत्वं श्रीमदूर्जितमेव वा ॥ तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवमिति गीताशास्त्रदशमाध्याय

वचनेन सर्वत्रैव श्रीमदूर्जितसत्वसामान्ये विष्ण्वंशेनैव तथात्वसंभवोक्त्या तन्न्यायेनाऽस्मिन्न
पि प्रबलदेवसेनाधिपत्यादिश्रीमत्त्वनिर्वाहायतदंशसद्भावाभिधानमात्रेणभगवदसाधारणलां
छनदर्शनायोगाद्वचनस्यान्यत्र सुप्रसिद्धचतुर्बाहुविषयत्वं संभवदुपेक्ष्य प्रसिद्धस्वोत्प्रेक्षामूलका
ल्पनिकचतुर्बाहुविषयत्वकल्पनाया नीतिविदामसंमतत्वाच्च ॥ १८३ ॥ यथाहि गीताशास्त्र
दशमाध्याये सेनानीनामहं स्कंद इति विष्ण्वंशयुक्तत्वमुक्तं तथैवाऽत्रापि स्कंदस्य विष्णुक
लांशमिश्रत्वमभिहितमिति न ततोऽत्र कश्चिदस्ति विशेषः ॥ ८४ ॥ तावन्मात्रेण भगवदसा
धारणचक्रादिलांछनदर्शनावश्यकत्वेऽश्वत्थः सर्ववृक्षाणामित्युक्ताश्वत्थेऽपि तद्दर्शनमापद्यते॥
॥ ८५ ॥ किंबहुना ना विष्णुः पृथिवीपतिरित्युक्त्या पार्थिवमात्रस्यापि विष्ण्वंशमिश्रत्वाव
श्यकत्वेन सर्वत्र भगवदसाधारणचक्रादिलांछनदर्शनप्रसंगो दुर्वार एव भवेदिति सम्यगव
धार्यताम् ॥ ८६ ॥ किंच वामनपुराणभागैकविंशांकाचिन्हितद्वितीयाध्यायांते ॥ कृतस्नानः
सरस्तीरे कुमारः समुपाविशत् ॥ दृष्ट्वा तपंतं वायुं च तत्समीपे षडाननः ॥ त्रिसंध्यं देव
देवेशं नारायणमनुस्मरन् ॥ अतिष्ठत्तप उग्रं च समाधिध्यानसंयुतः ॥ ध्यायन्नारायणं
देवं शंखचक्रधरं परमिति श्रीवेंकटाचलमागतस्य कुमारस्य तारकवधजनितस्वीयहत्यादो

षपरिहारार्थं तपस्यतः शंखचक्रधरश्रीमन्नारायणमुद्दिश्यैव तपश्चर्याकरणस्य कथनाच्चतुर्विंशांकचिन्हिते पंचमाध्याये ॥ इतः प्राक्कालप्रभृति तपश्चर्यापरायणस्य वायोस्तपःफलतया श्रीनिवासाख्यस्य भगवतो नारायणस्य प्रादुर्भावमभिधाय तद्वदेव स्कंदस्यापि स्वतपःफलतया तस्यैव नारायणस्य प्रत्यक्षसाक्षात्कारस्य ततो यावत्कल्पं तदाराधकत्वलक्षणवरलाभस्य च स्पष्टमभिधानाच्चाऽऽराधकभूतस्कंदस्तदाराध्यदेवताभूतस्य स्वामिपुष्करिणीदक्षिणतीराविर्भूतः श्रीनिवासाभिधानः श्रीमन्नारायण इति स्पष्टमेव प्रतीत्या तयोरैक्यं नह्यनुन्मत्तः कश्चिद्ब्रूयात् ॥ १८७॥ स्कंदस्य श्रीनिवासाराधकत्वं श्रीवेंकटाचलमाहात्म्यपरपुराणभागेषु प्रायशः सर्वत्र प्रसिद्धम् ॥ ८८॥ अत एव चवाराहपुराणप्रथमभागे एकषष्टितमांकचिन्हिते एकोनत्रिंशाध्याये श्रीनिवासाष्टोत्तरशतनामावल्यां कुमाराकल्पसेव्यायेति कुमारधारिकावासस्कंदाभीष्टप्रदायचेति च नामद्वयं निर्दिष्टम् ॥ ८९ ॥ किंच इदं तावदेते वादिनः प्रष्टव्याः स्वामिपुष्करिणी दक्षिणतीरे संप्रति सर्वदृक्पथगोचरार्चारूपेण कश्चिद्देवो विराजते ॥ १ ॥ तारकासुरवधजनितहत्यादोषपरिहाराय विष्णुमुद्दिश्य तपश्चर्याकरणार्थं श्रीवेंकटाचलमागतः स्कंदो नाम कश्चिद्देवः पुराणप्रतिपन्नः ॥ २ ॥ स्वामिपुष्करिणीदक्षिणतीरे ब्रह्मादिसकलदेवदे

वर्षिब्रह्मर्षिराजर्षिप्रमुखविरचितपरमतपश्चर्याफलतया सर्वेषामेव तेषां प्रत्यक्षगोचरतां गतोऽप्राकृतदिव्यविमानेन सहप्रादुर्भूतः श्रीनिवासाभिधानः कश्चिद्देवः पुराणप्रतिपन्नः ॥ ३ ॥ त्रिष्वेतेषु देवेषु प्रथमः किं द्वितीयः उत तृतीय इति ॥ ९१ ॥ न चात्र प्रथमः पक्षो युक्तः स्वपापहरणार्थं विष्णुमुद्दिश्य तपश्चर्याकरणाय वेंकटाचलमागतस्याऽस्य स्कंदस्याऽत्र श्रीनिवासभगवदाविर्भावतत्साक्षात्कारार्थंतपश्चर्याकरणायागतानां ब्रह्मरुद्रेंद्रादिसर्वदेवसर्वमहर्ष्यादीनामिव भगवदाराधकतामात्रेणाऽवस्थानस्यैव न्याय्यत्वेनैतस्य परमाराध्यतयाऽवस्थाने कारणाभावात्कुमारधारातीर्थ एवाऽस्य नियतवासप्रतिपादनेन स्वामिपुष्करिणीदक्षिणतीरे नियतवासस्यैवासिद्धेस्तादृशस्थलेऽर्चारूपेणास्य प्रतिष्ठापनं केनचित्कृतमिति कुत्रापि वेंकटाचलमाहात्म्यपरपुराणभागेषु प्रतिपादनादर्शनात्प्रत्युत तृतीयस्यैव देवमहर्ष्यादिप्रार्थनया तत्र नित्यसंनिधानस्य शंखराजतोंडमांश्चक्रवर्तिप्रभृतिभिरर्चारूपस्थापनालयनिर्माणपूजाप्रवर्तनादीनां च पुराणप्रतिपन्नत्वाच्च ॥ ९२ ॥ अथास्तु द्वितीय एव पक्ष इति चेत्तर्हि नासौ स्वामिपुष्करिणीदक्षिणतीरेऽर्चारूपेण संप्रति सर्वदृग्गोचरो विराजमानो देवः स्कंदः अपि तु स्कंदादन्य एवेति सिद्धं भवति ॥ ९३ ॥ तृतीयस्तु न स्कंदः स्कंदस्य ब्रह्मरुद्रेंद्रादिसर्वदेवसर्वमहर्ष्या

दीनां च तपश्चर्याफलतया तदाराध्यतया तेभ्योऽर्थांतरभूतस्यैव तत्र तथाविर्भावात् तदावि
र्भावप्रकरणेषु श्रीमन्नारायणएव श्रीवैकुंठात्क्रीडार्थं लोकरक्षणार्थं च श्रीवेंकटाचले तथाविर्भूत
इति नारायणपदादिश्रुत्यैव नारायणतया स्फुटप्रतिपन्नस्यास्य स्कंदशंकागंधानवकाशाच्च
॥ १४॥ तस्मात्स्कंदवादोऽयं किंचिदपि पूर्वोत्तरसंदर्भमपर्यालोच्यैव मंदमतिभिः प्रवर्तित इति
न विदुषामुपादेयः॥ १५॥अथ नाप्यसौ महादेवः पुर्वोक्तरीत्या तृतीयस्य महादेवत्वएव ताह
शविग्रहरूपस्य प्रथमस्य तथात्वाभिधानसंभवात् तृतीयस्य नारायणतायास्तदाविर्भावप्रक
रणस्यनारायणपदादिश्रुत्यैवाऽभिव्यक्ततया महादेवत्वकथाया अपिदूरतो निरस्तत्वाच्च १६
स्कंदागमनानंतरं श्रीनिवासभगवतः प्रकटतरमहाविर्भावकालात् किंचित्पुरस्ताद्ब्रह्मेंद्रादिदेव
महर्ष्यादिगणवदेवायमपि श्रीवेंकटाचलमागत्य तदाविर्भावसाक्षात्कारादिसिद्ध्यर्थमुपत्यका
यां तपश्चर्यापरायणः स्थित्वा तदाविर्भावकालेजायमानं कोलाहलं श्रुत्वा तत्र संनिधाय श्रीनि
निवासभगवंतमप्राकृतदिव्यविमानेन सह प्रादुर्भूतं प्रदर्शितनिखिलजगदुदयरक्षाप्रलयहे
तुनिजादिमदिव्यरूपमपरोक्षं निरीक्ष्याऽभिवंद्य स्वमनोरथविज्ञापनादिसल्लापं च कृत्वा पुनः
सगणःस्वस्थानं कैलासलोकं गत इति श्रीनिवासभगवांस्तु सविमानः श्रीवेंकटाचल एव कृत

नित्यमंनिधानः स्थित इति च वामनपुराणभागे स्पष्टमेवोपदिष्टमिति कथमसौ श्रीनिवासो महादेवो भवितुमर्हति ॥ ९७ ॥ यथोक्तं वामनपुराणे द्वाविंशांकचिन्हिते तृतीयाध्याये ॥ तपसोर्थे प्रयाते तु स्कंदे कांचनतेजसि॥ देवसेनासमायुक्तो धनुःशक्तिधरो द्विजाः॥ भर्तारं भक्तिनम्राथ पुत्रवात्सल्यचोदिता॥ पप्रच्छ पार्वती शंभुं हरं चंद्रार्धशेखरम् ॥ किं करिष्यति पुत्रो मे तत्र बालस्त्रिलोचनः॥ कथं द्रक्ष्यति तं देवमचिंत्यो ब्रह्मणापि यः॥इति पृष्टःस तां प्राह सोत्रासं परमेश्वरः॥ शृणु देवि परं गुह्यं भविष्यत्ते मयोच्यते॥सर्वे च मुनयस्तास्मिन्नागमिष्यंति पर्वते ॥ द्रष्टुकामः परं ब्रह्म तपस्तप्तुमनुत्तमम् ॥ देवा मनुष्याः पितरो गंधर्वा यक्षराक्षसाः॥सिद्धाः साध्याश्च गरुडाः पन्नगा ऋषयस्तथा ॥ चरिष्यंति तपस्तास्मिन्गिरौ गिरिवरात्मजे॥प्रत्यक्षं परमात्मानं द्रष्टुकामाः सनातनम्॥आवां तत्र गमिष्यावः कालेन महता प्रिये॥द्रष्टुं तत्परमं ब्रह्म तत्त्वं नारायणं परम्॥श्रीवेंकटाचले पुण्ये यत्तु प्रादुर्भविष्यति॥तत्प्रादुर्भावहेतोर्वै कर्तुं चापि महत्तपः॥ आवाभ्यामपि गंतव्यं तथान्यैर्दैवतर्षिभिरिति ॥ १ ॥ चतुर्विंशांकचिन्हिते पंचमाध्याये ततःपश्चात्तु शंखस्य राज्ञः प्रियचिकीर्षया ॥ विश्वविख्यातसुमहाप्रादुर्भावं करिष्यति ॥ सर्वलोकहितायैव शंखव्याजेन वै हरिः॥श्रीवेंकटाचले पुण्ये प्रादुर्भावं गमिष्यति ॥ तस्य हेतो

स्ततः पूर्वं कर्तुं च सुमहत्तपः॥आवां तत्र गमिष्यावश्चिरकालादनंतरम्॥गमिष्यंति सुराः सर्वे
सह सर्वैर्महर्षिभिः॥तदा कुमारं द्रक्ष्यावो विष्णुभक्तिपरायणम्॥इत्युक्ता शंकरेणाथ विरराम
तदा सती॥ ततः कालेन महता शंकरो गमनोन्मुखः॥ बभाषे पार्वतीं देवीं पुत्रदर्शनलालसा
म्॥शंकरउ०॥ अथ स कालः संप्राप्तो यः पुरा ते मयोदितः॥ श्रीवेंकटाव्हयं गंतुं महापुण्यं न
गोत्तममिति ॥ २ ॥ तत्रैवाध्याये उत्तरत्र ॥ आवां गच्छाव तं शैलं गिरिजे गणसंयुतौ ॥ नित्यं व
साव तत्रैव पश्यंतौ गुहमव्ययम्॥देवसेनापुलिंदाभ्यां विहरंतं वृषाचले॥इत्युक्त्वा वृषभारूढः
पार्वत्या सह शंकरः॥सगणश्च ययौ स्कंदं द्रष्टुं तं वृषभाचलमिति॥ ३ ॥ ९८ ॥ एवमष्टाविं
शांकचिन्हिते नवमाध्याये समहर्षिगणस्यागस्त्यस्य श्रीनिवासभगवदाविर्भावनिरीक्षिणः श्री
वेंकटाचलं प्रदक्षिणीकुर्वतो दक्षिणदिश्युपत्यकायां कपिलतीर्थसंनिधौ श्रीनिवासभगवदावि
र्भावार्थं समाधिं कुर्वता स्थितेन सगणेन महादेवेन समागमसँल्लापादिकं जातमित्यभिहितम्
॥९९॥ पंचत्रिंशांकचिन्हिते षोडशाध्याये॥श्रुत्वा तं शब्दमतुलं ब्रह्मा लोकपितामहः॥ ज्ञात्वाथ
वासुदेवं तं हरिं प्रत्यक्षतां गतम्॥ आजगामाथ तत्पार्श्वं कृष्णस्याक्लिष्टकारिणः ॥ मुनींद्रैर्देव
संघैश्च गंधर्वैश्च समावृतः॥ भगवाञ्छंकरश्चापि त्र्यंबकस्त्रिपुरांतकः॥ज्वलद्भास्करसंकाशजटा

मंडलशोभितः॥ तेन शब्देन विज्ञाय सांनिध्यं हरिमेधसः ॥ अभ्यगादाशु तत्पार्श्वं द्रष्टुं तं वसुधाधिपमित्यादिनासकोलाहलश्रीनिवासभगवदाविर्भावानंतरं तत्कोलाहलश्रवणेन ब्रह्मरुद्रेंद्रादिसर्वदेवसर्वमहर्ष्यादिसमागमतत्तत्कृतभगवद्वंदनस्तोत्रप्रार्थनादिकमभिहितम् ॥२००॥ अष्टत्रिंशांकचिन्हिते एकोनविंशाध्याये॥कथं स भगवाञ्छंभुः शंकरश्चंद्रशेखरः॥ प्रयातःपर्वताद्दिव्यं कैलासं स्वालयं शिव इत्यादिना कैलासं प्रति शिवस्य गमनमेवाभिहितं न पुनः स्वामिपुष्करिणीदक्षिणतीरएवावस्थानम्॥१॥श्रीनिवासभगवतस्तुस्वामिपुष्करिणीतीर आकल्पांतवास इति च आकल्पांतं वसामीह जगत्पालनकारणादिति चतुर्विंशांकचिन्हितवामनपुराणभागपंचमाध्यायस्थभगवदुक्त्या महादेवेनैवाऽनुदितया व्यक्तमवगम्यते ॥२ ॥ एवमेकोनपंचाशांकचिन्हितवाराहपुराणप्रथमभागसप्तदशाध्याये श्रीनिवासभगवदाविर्भावघट्टे श्रीवेंकटाचलेवासं प्रार्थयतोऽपि महादेवस्याऽप्राकृताचले प्राकृतानामाराध्यतयावस्थानानौचित्यमालोचयता श्रीनिवासभगवता तदुपत्यकायामेव वासोऽभ्यनुज्ञात इति च प्रागेवोक्तं ॥३ ॥ तत्रापि॥ आकल्पं च वसामीह वेंकटाव्हयभूधरे इति श्रीनिवासभगवतैव महादेवं प्रति स्वस्य श्रीवेंकटाचल आकल्पवासः प्रतिज्ञातो विज्ञायते ॥ ४ ॥ इत्थं महादेवस्य श्रीनिवासाविर्भावका

ले तत्तत्साक्षात्काराभिवंदनाद्यर्थं ब्रह्मादिवत् स्वामिपुष्करिणीतीर आगत्य गमनमात्रस्यैव प्रतिपन्नत्वात्तत्राविर्भूतदेवस्यैव तत्र नित्यावासस्य प्रतिपन्नत्वात्तस्य च ब्रह्मरुद्रादिसकलदेवमहर्ष्यादिवंद्यस्थानीयतायास्तदाविर्भावप्रकरणस्थभगवदसाधारणनारायणपदादिश्रुत्यैव नारायणरूपतायाश्च प्रतिपन्नत्वाच्च तदर्चावतारभूतोऽयं देवो न महादेवो भवितुमर्हति ॥ ५ ॥

किंच महादेवस्य लिंगाकारेणैवाऽऽराध्यताया लोके शास्त्रे च प्रसिद्धतया सकलावयवशालिमूर्तिमदर्चाविग्रहरूपेणाऽऽराध्यता क्वाप्यप्रसिद्धा प्रतिषिद्धा च शास्त्रेणेति नासौ महादेवः ॥६

महादेवस्य सकलावयवशालिमूर्तिमद्विग्रहरूपेणाराध्यताप्रतिषेधो लिंगरूपेणैवाऽराध्यता च श्रीवेंकटाचलमाहात्म्यपरभविष्योत्तरपुराणभागद्वितीयाध्यायेपि प्रत्यपादिषाताम् ॥ ७ ॥

तस्यैतस्य श्रीनिवासदेवस्य महादेवादर्थांतरभूततदीयपरमोपास्यभूतनारायणरूपत्वादेव एकषष्ठितमांकचिन्हितवाराहपुराणप्रथमभागैकोनत्रिंशाध्यायेऽष्टोत्तरशतनामावल्यां उपत्यकाप्रदेशस्थशंकरध्यातमूर्तय इति नाम ब्रह्मांडपुराणाखिलश्रीवेंकटेशसहस्रनामाध्याये श्रीनिवाससहस्रनामपाठे ॥ कालगम्यःकालकंठवंद्यः कालकलेश्वर इत्यत्र कालकंठवंद्य इति नाम सुवर्णमुखरीतीरशिवध्यातपदांबुज इति नाम च तस्य पठ्यते ॥ ८ ॥ अत एव च भविष्योत्तर

पुराणोत्तरखंडांतर्गताशीतितमाध्याये पार्वतीं प्रति महादेवेनैव श्रीनिवासनाम्ना श्रीवेंकटेश
स्य स्वीयनित्यहार्दपरमरहस्यध्यानविषयपरमोपास्यभूतनारायणरूपताप्रस्फुटमेवाऽऽभि
हितादृश्यते॥९॥यदुक्तं जटाधरत्वनागभूषणत्वयोर्महादेवएव प्रसिद्धिप्राचुर्यादसौ महादेवइति
॥२१०॥तदयुक्तं भगवदसाधारणनारायणपदादिश्रुत्यास्य देवस्य नारायणत्वे स्फुटतरंनिर्णी
यमाने लिंगेन देवतांतरत्वनिर्णयायोगाद्भगवदवतारेष्वपि तादृशलिंगसद्भावस्य प्रमाणप्रसि
द्धतायाः प्रागेवावेदितत्वाच्च ॥११॥ किंच रुद्रस्य नानावतारकथाया अभावेनैकविधेतदीयरूपे
सर्वदा जटाधरत्वनागभूषणत्वयोः सद्भावेन तयोस्तत्रप्रसिद्धिरिति विष्णोस्तुनानावतारशालि
नःक्वचित्तादृशविशेषणसद्भावात्क्वचिदसद्भावाच्च तयोः प्रसिद्धिप्राचुर्यं नास्तीति च वादिभिर्म
न्यते ॥१२॥ तदयुक्तं प्रतिकल्प भाविषु विष्णोर्नानावतारेषु यस्मिन्यस्मिन्नवतारे यद्यल्लक्षणं प्र
तिपन्नं तत्तदवतारेषु तत्तल्लक्षणदर्शनं तस्य प्रतिकल्पनियतभाव्येवोपलभ्यत इति प्रसिद्धिप्राचु
र्यस्यानपायात्प्रत्युत तादृशलक्षणस्यैककल्पे रुद्रस्यैकरूपएव सद्भावेन भगवति नानावतारेषु
सद्भावेन च रुद्रगततत्प्रसिद्ध्यपेक्षया भगवद्गततत्प्रसिद्धेरेवाधिकत्वाच्च॥१३॥जटाधरत्वंभगवतो
बहुष्ववतारेषु बहुभिःप्रमाणैःप्रसिद्धं सुप्रसिद्धं च श्रीरामावतारे श्रीरामायणादिष्विति प्रागेव

ज्ञापितं॥१४॥श्रीरामावतारे जटाधरत्वप्रसिद्धिश्च श्रीवेंकटाचलमाहात्म्यपरब्रह्मांडपुराणाखि
लश्रीवेंकटेशसहस्त्रनामाध्यायेऽपि ॥ जटावान्पर्णशालास्थो मारीचबलमर्दक इत्यनेन दर्शिता
॥ १५ ॥ नागभूषणत्वं भगवदवतारेषु श्रीवेंकटेशावतारस्य सुप्रसिद्धस्वरूपनिरूपकव्यावर्त
कधर्म इति च दर्शितंसहस्त्रनामाध्याये ॥ मृगयाक्षीणसंनाहशंखराजन्यतुष्टिदः ॥ स्थाणुस्थोवै
नतेयांगभावितोहिशरीरवान् ॥ भोगींद्रभोगसंस्थानो ब्रह्मादिगणसेवितः ॥ सहस्त्रार्कच्छटा
भास्वद्विमानांतःस्थितो गुणी इत्यादिश्रीवेंकटेशाऽवतारलक्षणप्रकरणे भोगींद्रभोगसंस्थान
इत्यनेन दर्शितं भोगींद्रभोगः संस्थानं वस्तु संस्थानशब्दितोऽसाधारणस्वरूपनिरूपकधर्मो
यस्य स इति विगृहीतेन भोगींद्रभोगसंस्थानशब्देन नागभूषणत्वस्यैवाभिधानादेतदवतारा
साधारणमृगयाऽक्षीणसंनाहत्वशंखराजन्यतुष्टिदत्वादिधर्मसाहचर्येणास्य धर्मस्याभिधानाद
साधारणस्वरूपनिरूपकधर्मत्वसिद्धेश्च ॥ १६ ॥ अत्र स्थाणुस्थ इत्यभिधानं भविष्योत्तरपुरा
णोत्तरखंडगतश्रीवेंकटेशरहस्यानुभवाख्याशीतितमाध्याये श्रीवेंकटेशावतारस्य सततमहादे
वहृदयावस्थितपरमरहस्यध्यानानुभवगोचरध्येयवस्तुरूपताभिधानसमानाभिप्रायकमिति
अशरीरवानित्यत्वस्य श्रीवेंकटेशस्य सविमानविलक्षणदिव्यविग्रहस्य सर्वदुर्गोचरत्वतदभा

वप्रयाजकार्तार्हितत्वानंतरितत्वदशयोः सर्वत्र पुराणेषु प्रतिपन्नत्वात्तादृशदशाद्वयाभिप्रायेण दर्शितभविष्योत्तरपुराणोत्तरखंडाशीतितमाध्याये निराकारत्वसाकारत्वनिर्देशाच्च तत्रांतर्हितदशापन्नविग्रहादिकत्वपरतया तत्समानाभिप्रायकं सत्सर्वदृश्यतया शरीररहितत्वदशार्थकमिति च बोध्यम् ॥ १७ ॥ भगवदितरेष्वपि नागभूषणत्वं महादेव एव प्रसिद्धमित्यप्यसाधु वैनतेये नागभूषणत्वस्य सुप्रसिद्धतरत्वात् ॥ १८ ॥ पाद्मपुराणभागषड्विंशांकचिन्हिततृतीयाध्याये शुकमुनिं प्रति पद्मसरोवरतीरश्रीनिवासभगवदाविर्भावघट्टे ॥ पंचात्मनः सुपर्णस्य पंचोपनिषदात्मनः ॥ पंचवक्त्रप्रातिकृतेः पंचाथर्वांगसंपदः ॥ ऋग्यजुःसामवपुषो नागाभरणभूषणः ॥ अप्रमेयप्रभावस्य स्कंदपीठमधिष्ठित इत्यत्र श्रीनिवासभगवदधिष्ठानभूतवैनतेयस्य नागभूषणत्वं सुप्रसिद्धं दर्शितम् ॥ १९ ॥ भगवच्छास्त्रे च दिव्यायुधवाहनादिरूपाणां नित्यसूरीणां भगवतस्तेजःशक्तिबृंहितरूपत्वेनैव वस्तुतायाः सिद्धत्वाद्दर्शितवैनतेयशक्तिविशेषस्यापि विष्णुशक्तिविशेषरूपतैव सिद्धा ॥ २२० ॥ इत्थं जटाधरत्वादिलक्षणानां भगवदवतारविशेषलक्षणताया अपि शास्त्रसिद्धत्वेन तेषां देवतांतरलक्षणतामात्रमनुसंदधानैर्वादिभिश्चक्रादिभगवल्लक्षणैरस्यदेवस्य वैष्णवैर्विष्णुत्वाभिधाने जटाधरत्वादिहरलक्षणैर्हरत्वं वदतामस्माकं को

निरुद्धेति वादः परास्तः ॥ २१ ॥ चक्रादिलक्षणानि तु भगवदसाधारणान्येवेति तु दर्शितवा
मनपुराण एव महादेवेनैव स्वस्य भगवतश्च संवादमनुवदता पार्वतीं प्रति कथितम् ॥ २२ ॥
द्वाविंशांकचिन्हितवामनपुराणतृतीयाध्याये ॥ एतच्छ्रुत्वांबिकां प्राह शंकरो लोकशंकरः ॥ अ
नादिनिधनं दिव्यमप्रमेयपराक्रमम् ॥ सहस्रारसमायुक्तं कोटिसूर्यसमप्रभम् ॥ सुदर्शनाख्यं
तच्चक्रं विष्णोरेव तु पार्वति ॥ धर्तुमन्यैर्न शक्यं तत्तं विना पुरुषोत्तमम् ॥ तेन चक्रेण दिव्येन द
ग्धा वाराणसी पुरी ॥ सा राजधानी मे दिव्या कृत्याहेतोर्विनाशिता ॥ कस्मिंश्चिदथ काले तु म
यि प्रीतो जनार्दनः ॥ किमिच्छसीति मां प्राह वरदानसमुद्यतः ॥ एवमुक्ते मया तस्माद्याचितं
वरमुत्तमम् ॥ येन चक्रेण मे दग्धा पुरी वाराणसी हरे ॥ तद्यथा मद्वशं यायान्मम प्रेषं च माधव ॥
तथा कुरु मयि प्रीतो नान्यं वरमहं वृणे ॥ एवं विज्ञापितो देवं प्रहस्य मधुसूदनः ॥ हस्तेन मम
हस्ताग्रं गृहीत्वेदमुवाच ह ॥ कथं सूर्यं परित्यज्य प्रभाऽन्यस्य भविष्यति ॥ एवं श्रीःकौस्तुभं च
क्रं गरुडः शार्ङ्गमेव च ॥ एवमादीनि वस्तूनि नित्यसिद्धानि शंकर ॥ नैतेषां जन्मविलयौ नान्य
स्तेषां व्यपाश्रयः ॥ अशक्यमिदमत्यर्थं याचितं प्रमथाधिपेत्यादिना साक्षात्सुदर्शनादिलक्ष
णानां भगवदसाधारणत्वमेव दर्शितम् ॥ २३ ॥ चक्रादिलक्षणानां भगवदसाधारणत्वाज्जटाधर

त्वादिलक्षणानां भगवदवतारविशेषसाधारणत्वाच्च महादेवकथाया असंभवदुक्तिकत्वमेव २४
यदप्युक्तं सर्वकारणत्वेनाभ्युपगते विष्णौ वैष्णवैः सर्वलक्षणोपपादनन्यायेनैवास्माभिस्तथा
त्वेनाभ्युपगते महादेव एव सर्वलक्षणोपपादनसंभव इति ॥ २५ ॥ तदप्ययुक्तं नारायणे त
रस्य सर्वकारणत्वासंभवस्य श्रुतिषु सुप्रसिद्धत्वाद्भगवदसाधारणनारायणादिपदश्रुत्या देवता
विशेषनिर्णयस्यात्र स्पष्टतरं संभवेन रुद्रे सर्वकारणत्वसंभवासंभवविवादपरिहारस्यापि सं
प्रत्यत्यंतमावश्यकत्वाभावाच्च ॥ २६ ॥ तस्मान्नासौ महादेव इति सिद्धं भवति ॥ २७ ॥ अ
थ नाप्यसौ हरिहरावताररूपो देवः शंखचक्रादिभगवदसाधारणचिन्हानामनन्यथासिद्धे लिं
गांतराणां भगवत्साधारण्योत्पादनेनान्यथासिद्धत्वादाविर्भावघट्टेषु श्रीवैकुंठादितः साक्षान्ना
रायण एवात्रागत्याविर्भूत इति भगवदसाधारणनारायणविष्ण्वादिपदश्रुत्यैव नारायणताया
निर्णीयमानत्वाच्च ॥ २८ ॥ दिव्यसूर्यगाथाविशेषेऽपि स्वस्वामिनः श्रीमन्नारायणस्यैव द्विवि
धाकारौ लक्षणतया भात इत्येवोक्तं न तु देवताद्वयात्मकोयं देव इत्यतो न तत्प्रामाण्यात्तस्य ह
रिहरावताररूपत्वसाधनं संभवदुक्तिकमित्यवधेयम् ॥ २९ ॥ एवमस्य देवस्य प्रादुर्भावसमये
ब्रह्मरुद्रादिभिःसर्वैः स्वस्वस्थानेभ्यः समागतैः संसेवितत्वाभिधानस्य स्पष्टतया रुद्ररूपत्वे त

त्पितृभूतब्रह्मसेवितत्ववर्णनमसंगतं पुत्रस्य पितृवंद्यत्वायोगाद्रुद्रसेवितत्ववर्णनमप्यसंगतं स्व
स्य स्वसेव्यत्वायोगाद्रुद्ररूपस्यास्यात्रैव संनिधाने स्थिते कैलासाख्यस्थानांतरात्पार्थक्येनैत
द्देवसेवनार्थमागमनपुनर्गमनयोर्वर्णनायोगाच्चेत्यपि बोध्यम् ॥ ३० ॥ किंच हरिहरावतार
रूपत्वं वदता वादिनामर्धनारीश्वरन्यायेनैकशरीराधिष्ठानं देवताद्वयमिति ह्यभिमतं वक्तव्य
म् ॥ ३१ ॥ तच्च न युज्यते अप्राकृतेऽस्मिन्भगवतो वेंकटाचल एवाराध्यतया देवतांतरावस्था
नासंभवस्य प्रागुदाहृतवचनसिद्धतया भगवच्छरीरे तदवस्थानासंभवस्य किं पुनर्न्यायसिद्ध
त्वाच्छरीरस्यैकदेशे एकदेवतालक्षणानामपरभागे देवतांतरलक्षणानां च पार्थक्येनादर्शनेनार्ध
नारीश्वरन्यायानवकाशाद्वामनपुराणभागे भगवतोऽप्राकृते दिव्यवपुषि साक्षात्संस्पर्शयोग्य
तायाः स्वस्मिन्संभवस्य तत एव सद्वारकसंबंधसंपादनप्रवृत्तेश्च महादेवेन स्वयमेव स्पष्टम
भिहितत्वाच्च ॥ ३२ ॥ यथोक्तं वामनपुराणभागे चतुर्विंशांकचिन्हिते पंचमाध्याये ॥ सुदर्शनांश
भूतकालचक्राभिमानिपुरुषं स्वात्मानमुद्दिश्य तपः कृतवंतं प्रति महादेवेन ॥ शुद्धसत्वस्य तद्वि
ष्णोः सर्वयज्ञमयं वपुः ॥ साक्षात्स्प्रष्टुमहं भीतस्तमोगुणसमाश्रयः ॥ वस्तव्यं च मया विष्णोर्दि
व्यमंगलविग्रहे॥त्वामेव तदहं नित्यं विष्णोर्नित्यानपायिनम् ॥ अनुप्रविश्य तद्देहे वसिष्यामि

सुदर्शनेति ॥ ३३ ॥ अप्राकृतदिव्यविमानेनाऽप्राकृतदिव्यवपुषा दिव्यैरप्राकृतैर्भूषणायुधैश्च भगवाञ्छ्रियः पतिः स्वामिपुष्करिणीतीरप्रादुर्भूत इति च प्रकटतरं निरूपितं पुराणभागेषु ॥ ॥ ३४ ॥ तस्मान्नात्र हरिहरावतारकथाकंथा किंचिदप्यवकाशं लब्धुमर्हति ॥ ३५ ॥ यदप्युक्तं स्कंदपुराणप्रथमभागांतर्गताष्टमाध्याये कतिपयश्लोकेषु श्रीनिवासमहादेवशब्दाभ्यामस्य देवस्य निर्देशोस्य हरिहरावताररूपत्वोत्तंभक इति ॥ ३६॥ तदप्यसाधु तत्रत्यमहादेवशब्दस्य योगेन सर्वाधिकदेवतामात्रपरतया देवतांतररूढशब्दरूपत्वाभावादत एव तत्प्रकरणे तत्स्थान एव कतिपयश्लोकेषु दर्शितरीत्या सर्वाधिकदेवतापरशब्दांतरप्रयोगदर्शनाच्च ॥ ३७॥ यथोक्तं तस्मिन्नध्याये तस्मिन्नेव प्रकरणे ॥ ये स्मरंति महादेवं श्रीनिवासं विमुक्तिदम् ॥ कीर्तयंत्यथ वा विप्रास्ते मुक्ताः पापपंजरात् ॥ नारायणं परं देवं वेंकटेशं प्रयांति वा इति ॥ १ ॥ वेंकटेशं परं देवं यो न चिंतयति क्षणम् ॥ अज्ञानी स च पापी स्यात्स मूको बधिरस्तथेति ॥ २ ॥ वेंकटेशं परं देवं ये पश्यंत्यर्चयंति वा ॥ जन्म तेषां हि सफलं ते कृतार्थाश्च नेतरे॥ वेंकटेशे परे देवे दृष्टे वा पूजितेऽपि वा ॥ शंभुना ब्रह्मणा किंवा शक्रेणाप्यखिलामरैरिति ॥ ३ ॥ वेंकटाख्ये महापुण्येसर्वपातकनाशने ॥ श्रीनिवासं परं देवं यः पश्यति सभक्तिकम् ॥ न तेन तुल्यतामेति

चतुर्वेद्यपिभूतल इति च ॥ ४ ॥ ३८ ॥ अत्र महादेवशब्दस्थाने परदेवशब्दप्रयोगात्तत्समा
नार्थक एवमहादेवशब्द इति स्पष्टम् ॥ ३९ ॥ किंच तत्प्रकरणे ॥ ब्रह्महत्यासहस्राणि सु
रापानायुतानि च ॥ दृष्टे नारायणे देवि विलयं यान्ति कृत्स्नश इति ॥ १ ॥ वेंकटाचलदेवेशं
कीर्तयन्नर्चयन्नपि ॥ अवश्यं विष्णुसायुज्यं लभते नात्र संशय इति ॥ २ ॥ वेंकटेश्वरदेवेशं
यः पूजयति भक्तितः ॥ स कोटिकुलसंयुक्तः प्रयाति हरिमंदिरमिति च ॥ ३ ॥ वेंकटेशदेव
स्य नारायणतायास्तत्पूजकस्य विष्णुसायुज्यैकफलतायाश्च स्पष्टमेवाभिधानान्नासौ हरि
हरावताररूपो देवः तथा सत्येकान्ततो विष्णुसायुज्यस्यैव फलतयाऽभिधानासांगत्यादस्य
देवस्य शंभुत्वे शंभुना ब्रह्मणा किं वेत्याद्यभिधानासांगत्याच्च ॥ २४० ॥ यदपि चोक्तं अष्ट
मींदुकलाधारललाटस्थोर्ध्वपुण्ड्रक इति पाद्मपुराणभागस्थसप्तविंशांकचिन्हितचतुर्थाध्यायव
चनेन हरिहरावताररूपत्वमस्य देवस्योत्तभ्यत इति ॥ ४१ ॥ तदप्ययुक्तं अष्टमीन्दुकलेवाधा
रं मूलं यस्य तदष्टमींदुकलाधारं तथा विधं ललाटस्थमूर्ध्वपुण्ड्रं यस्य स इति विगृहीतेना
ष्टमींदुकलाधारललाटस्थोर्ध्वपुण्ड्रकशब्देनाऽर्धीकृतपूर्णेन्दुमण्डलाकारमूलभागतदुपर्यूर्ध्वनिः
सृतसुधारेखाद्वयाकारसान्तरालरेखाद्वयात्मकोर्ध्वपुण्ड्रविन्यासविशेषस्यैवाभिधीयमानतया

अस्य वचनस्य चन्द्रशेखरत्वोर्ध्वपुण्ड्रधरत्वरूपहरिहरलांछनप्रतिपादनपरत्वाभावात् एकोन
त्रिंशांकाचिन्हिततत्पुराणषष्ठाध्याये ॥ ललाटपट्टघटितवेणुपत्रोर्ध्वपुण्ड्रकः इतिवचने श्रीश्वेतव
राहभगवतऊर्ध्वपुण्ड्रविन्यासविशेषाभिधानवदस्यापि वचनस्य श्रीनिवासभगवदूर्ध्वपुण्ड्र
विन्यासविशेषप्रदर्शनपरताया एव स्वारसिकत्वाच्च ॥ ४२ ॥ समूलसान्तरालरेखाद्वितयात्म
कत्वं चोर्ध्वपुण्ड्रस्य शास्त्रसिद्धम् ॥ ४३ ॥ यथोक्तं कात्यायनीयश्वेतमृदूर्ध्वपुण्ड्रोपनिषदि ॥ ए
कांगुलं फालतल ऊर्ध्वस्य मूलं तदुत्पन्ने द्वे शाखे तथैव मध्ये अवकाशोंऽगुलादन्यूनः स श्रीप्र
तिष्ठायै श्रीर्हरिद्रा यतः श्रीमान्भवतीति ॥ ४४ ॥ उक्तं च पाद्मोत्तरखण्डैकत्रिंशांकचिन्हिते तृ
तीयाध्याये ॥ आरभ्य नासिकामूलं ललाटान्तं लिखेन्मृदा॥समारभ्य भ्रुवोर्मध्यमन्तरालंप्रक
ल्पयेत् ॥ अन्तरालं द्व्यंगुलं स्यात्पार्श्वावंगुलिमात्रकाविति ॥ ४५ ॥ भारद्वाजसंहितायां चोक्तं
आचम्य धारयेत्पुण्ड्रान्पूर्ववच्छुभ्रया मृदा॥आरभ्य नासिकामूलमाकेशान्तं प्रकल्पयेत् ॥ ना
सिकायास्त्रिभागस्तु नासिकामूलमिष्यते ॥ हारिद्रेण तु चूर्णेन कुंकुमेन सुगंधिना ॥ ऊर्ध्वपुण्ड्र
स्य मध्ये तु लक्ष्मीस्थानं प्रकल्पयेत् इति ॥ ४६ ॥ वैखानसागमेप्युक्तं ॥ नासिकामूलमा
रभ्य रेखाद्वितयसंयुतम्॥ धारयेदूर्ध्वपुण्ड्रं तु हरेः फालतले शुभ इति ॥ ४७ ॥ एवमन्यद

प्युर्ध्वपुण्ड्रविन्यासविशेषप्रदर्शनपरं प्रमाणजातं द्रष्टव्यम् ॥ ४८ ॥ अत्र रेखाद्वितयात्मको
र्ध्वपुण्ड्रमूलस्य नासिकामूलगतस्याऽर्धीकृतपूर्णेंदुमण्डलसमानाकारतया भगवतो ललाटस्थ
मूर्ध्वपुण्ड्रमष्टमींदुकलातुल्यमूलमित्यभिप्रायेणैव अष्टमींदुकलाधारललाटस्थोर्ध्वपुण्ड्रक इ
त्युक्तम् ॥ ४९ ॥ यद्वा अष्टमींदुकलाकारललाटस्थोर्ध्वपुण्ड्रक इत्येवात्र पाठः॥अष्टमीन्दुकला
कारेत्येतच्च ललाटविशेषणमिति बोध्यं॥अष्टमीन्दुकलाकारे ललाटे दर्पणस्फुटे ॥ ऊर्ध्वपुण्ड्रं द
धाराथ श्रीनिवासः सतां गतिः ॥ समूलरेखाद्वितयं श्वेतमृत्तिकया स्वयमिति भविष्योत्तरपुरा
णैकादशाध्यायवचनैककण्ठ्यात् ॥ २५० ॥ पूर्वपाठस्यैव प्रामाणिकत्वे च यथोक्तरीत्यैव अर्थः
सुसंगतो बोद्धव्यः ॥ ५१ ॥ एवं शंकरस्य शिरसि चन्द्रकलायाः सद्भावेऽपि ललाटे तदभावा
दष्टमीन्दुकलाधारललाटस्थोर्ध्वपुण्ड्रक इत्यत्र ललाटे चन्द्रकलाया आधारत्वप्रतिपादनपरत्व
वर्णनं वादिनामसंगतमेव ॥ ५२ ॥ तस्मान्न कथंचिदप्यत्र हरिहरावतारत्वकथा सम्यग्ल
ग्ना भवति ॥ ५३ ॥ इदं पुनरत्रावधेयं भगवतो हि नारायणस्य मत्स्यकूर्मवराहादिरूपानाना
विधवर्णाकारा अवताराः सहस्रशः सन्ति ॥ १ ॥ तेषु च विष्णुरेवायमित्थमवतीर्ण इति तत्रत
त्र प्रयुक्तभगवदसाधारणनारायणविष्ण्वादिपदश्रुत्यैव विष्णुरूपता निर्णेया न तु लिंगैः ॥

॥ २ ॥ लिंगपर्यालोचने च मत्स्यत्वकूर्मत्ववराहत्वादिरूपजात्या प्राकृतमत्स्यादिमात्ररूपतैव सिध्येत् ॥ ३ ॥ तत्र यथा लिंगाच्छ्रुतिप्राबल्येन प्राकृतमत्स्यादिमात्ररूपत्वमपनुद्य विष्णुत्वमवधारयन्ति न्यायविदः ॥ ४ ॥ तथा श्रीवैकुण्ठाच्छ्रीमन्नारायण एवेहेत्थंभूतवेषशाली श्रीनिवाससंज्ञः श्रीवेंकटेशरूपेणावतीर्ण इति श्रूयमाणभगवदसाधारणनारायणपदादिश्रुत्या प्रबलया जटाधरत्वनागभूषणत्वादिदुर्बललिंगाधीनदेवतान्तरत्वधियमपनुद्य नारायणत्वमेव निर्णेतुं शक्यम् ॥ ५ ॥ नहि खल्वस्मादयमीदृशवेषशाल्यत्रागत इति स्फुटमभिधीयमाने वेषमात्रेण तस्मादन्यत्वं तस्य निश्चेतुं शक्यं ॥ ६ ॥ लोकेपि हि रामकृष्णसीतासत्यभामादिभूमिकाभेदधारिणि रंगावतीर्णे शैलूषेऽमुकोऽत्रेदृशवेषशाली समागत इति स्फुटमवगते वेषमात्रेण न रामकृष्णादित्वमनुन्मत्तः कश्चित्प्रत्येति ॥ ७ ॥ नागभूषणत्वादिकं विष्णोरवतारान्तरेषु न क्वचिद्दृष्टमिति चेन्मत्स्यत्वकूर्मत्ववराहत्वादिकमपि न तत्तदवताराभिन्नावतारेषु क्वचित्प्रसिद्धमिति तुल्यं ॥ ८ ॥ किंच श्रीकृष्णावतारेऽवतारान्तरव्यावृत्तमयूरपिच्छभूषणत्वदर्शनमात्रेण मयूरवाहन एवायमिति नैतेवादिनोपि विवदन्ते ॥ ९ ॥ अपि च नागभूषणत्वमिह दृश्यमानं न भगवदवतारान्तरव्यावृत्तं विवादकथाकंथागंधविधुरे हस्तिगिरिनाथे श्रीवरदराजभगवत्यपि तस्य दृश्यमानत्वात् १०

तस्य देवस्य अनंताराधितत्वमेव तदाकारभूषणधारित्वनिमित्तमिति चेत्ततोप्यधिकतरं निमि
त्तमिहाप्यस्तीत्यभिहितमेव प्राक् ॥ ११ ॥ तस्मादसौ वेंकटेशो न देवतान्तरं श्रुतिलिंगवाक्य
प्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षादिति हि पूर्वकांडे तत्त्वनिर्धारणप्र
वृत्तेषु षट्सु प्रमाणेषु श्रुतेः सकलेतरप्राबल्यमभिहितम् ॥ १३ ॥ अत्र निर्दिष्टानि षड्विधान्य
पि च प्रमाणानि श्रीवेंकटेशं श्रीमन्नारायणमेवेह प्रतिपादयन्ति ॥ १४ ॥ श्रुतिस्तावदवतारघ
ट्टेषु भगवदसाधारणनारायणविष्ण्वादिपदरूपा सुप्रसिद्धा ॥ १५ ॥ अवतारघट्टेषु भगव
द्वाचकतया भगवदसाधारणनारायणविष्ण्वादिशब्दा बहुशः प्रयुज्यमानास्तत्रतत्र द्रष्टव्याः
॥ १६ ॥ शंखचक्रादिदिव्यायुधधरत्वलक्ष्मीसमालिंगितवक्षस्कत्वगरुडाधिष्ठितविमानारूढ
त्वब्रह्मरुद्रादिसकलेतरवंद्यमानचरणनलिनत्वादीनि च देवतान्तरव्यावृत्तानि भगवदसाधार
णानि लिंगानि तत्रतत्र प्रतिपाद्यन्ते ॥ १७ ॥ लक्ष्मीपतित्वादिभगवदसाधारणधर्मप्रतिपाद
कानि श्रियःपतिरित्येवमादीन्यनन्तानि वाक्यानि च तत्रतत्र द्रष्टव्यानि ॥ १८ ॥ भविष्यो
त्तरपुराणे श्रीवराहपुराणद्वितीयभागे च यशोदायाः श्रीकृष्णभगवतः परिणयमंगलदर्शनसुख
कांक्षिण्याः तदवतारे तदलाभेन अवतारान्तरे तत्सुखं दास्यामीति भगवता दत्तवरायाः पुनः

कलौ बकुलमालिकारूपेण श्रीवेंकटाद्राववतीर्णायाः पूर्वप्रतिज्ञातत्सुखदानार्थमवश्यकर्तव्या वतारस्य श्रीकृष्णभगवतः स्थाने श्रीनिवासनामा श्रीवेंकटेशोऽवतीर्य तन्मुखेनैवाकाशराजपुत्रीपरिणयं कृत्वा तस्यैतादृशं सुखं प्रादिशदिति प्रतिपादनात्पूर्वं श्रीरामावतारे स्वप्रतिनिधितया लंकायां घोरतररावणभवनवासक्लेशमनुभूतवत्या वेदवतीनाम्न्याः स्वसख्याः परिणयं कर्तव्यतया रावणवधानंतराग्निप्रवेशकाले प्रार्थितवत्याः सीतादेव्या मनोरथानुगुण्येन कलौ तस्याः परिणयं करिष्यामीति भगवता श्रीरामेण प्रतिज्ञाकरणात्कलावाकाशराजपुत्रीरूपेण जातायाः पद्मावतीनाम्न्या वेदवत्याः परिणयार्थमवश्यकर्तव्यावतारस्य श्रीरामभगवतः स्थाने श्रीनिवाससंज्ञः श्रीवेंकटेशोऽवतीर्य पद्मावतीं परिजग्राहेति प्रतिपादनाच्च श्रीवेंकटेशः श्रीमहाविष्णुरेवेत्यत्र स्थानप्रमाणमपि सिद्धं भवति तत्तत्कार्यकरणप्रतिज्ञाकर्तुस्तदनुगुणकार्यकर्तुश्चैकताया आवश्यकत्वात् ॥ १९ ॥ श्रीरामकृष्णयोर्भगवदवतारत्वं हि निर्विवादम् ॥ २० तत्तत्पुराणाद्यंतभागेषु विष्णुक्षेत्रप्रस्तावोपसंहारयोरेव दर्शनात्प्रकरणप्रमाणमपि सिद्धं भवति ॥ २१ ॥ श्रीनिवाससमाख्याबलाच्चास्य देवस्य विष्णुत्वं सिध्यतीति समाख्यारूपप्रमाणमपि दर्शितं भवति ॥ २२ ॥ श्रीनिवास समाख्याचास्य देवस्य ब्राह्मपुराणे सप्तमाध्याये॥ केन

नाम्ना प्रसिद्धोसौ भगवान्हरिरीश्वरः ॥ किंलक्षणश्च तत्रास्ते तन्मे ब्रूहि तपोधन ॥ ॥
॥ दुर्वासा उवाच ॥ ॥ श्रीनिवासाख्ययादेवःशंखचक्रधरो विभुरित्यादिना समाख्यलक्षण
प्रतिपादकेन ग्रंथेन प्रश्नोत्तरपूर्वकं प्रतिपादिता द्रष्टव्या तस्मादित्थं षड्भिः प्रमाणैः प्रतिप
न्नदुरपन्हवनारायणभावे दुरारोपदेवतांतरभावे श्रीनिवाससंज्ञे श्रीवेंकटागिरिनाथे कतिपय
लिंगाभासैर्देवतांतरभावबलादारोपयतां वादिनां मनोरथो न कथंचिदपि सेत्स्यतीति सम्य
गवधारणीयम् ॥ २३ ॥ नागभूषणत्वादिदेवतांतरचिन्हदर्शनेन देवतांतरशंकायोग्यतासद्भा
वमात्रेण प्रायशः शंकंते मुग्धाः ॥ २४ ॥ विदग्धानां तु न किंचिदत्र देवतांतरशंकापदमस्ति
॥ २५ ॥ तदिदं सर्वं भोगीशकंकणः शंक्यो निःशंकः शंकिताखिल इति श्रीवेंकटेशसहस्र
नामपाठगतनामचतुष्टयपर्यालोचनेनैव सुगममिति नात्र विशेषतो निरूपणीयमस्तीति ॥
॥ २५४ ॥ तस्माद्वादिवादानुरोधेन माऽत्र देवतांतरसंबंधगंधशंकां कृथाः ॥ २५५ ॥ ॥ पद्य
म् ॥ ॥इत्थं यतीशेन विबोध्यमानो विसिस्मये यादवभूमिपालः ॥ निरूपणं तस्यबुधावली
नां शिरःप्रकंपं जनयन्निशम्य ॥ ५६ ॥ कल्पांतवातूलरयोत्थितेन मेने स तूलेन समानलीलम् ॥
उत्क्षिप्य विक्षिप्तमतीव दूराद्यतींद्रवाण्या लघुशैववादम् ॥ ५७ ॥ इत्थं यतीशानसयुक्तिवा

ण्या निरस्तसंजातसमस्तशंकः ॥ शैवान्बभाषे स तदा नरेंद्र उत्खातदंष्ट्रानिव पन्नगेंद्रान् ॥
॥ ५८॥ भोः शैवा भवतां वादः कृत्स्नोपि रामानुजमुनिना सहस्रशः शकलीकृतएवासीत्॥५९॥
अहोअहो रामानुजमुनेर्वाग्मित्वं वाचस्पतिमप्यतिशेते ॥ २६० ॥ इतः परं किं ब्रुवंति भवंतः
॥ ६१ ॥ ॥ पद्यम् ॥ ॥ इति कर्तव्यतामुग्धाः शैवा इत्थमुदीरताः ॥ यादवक्षोणिपालं तमूचुः
कालोचितं वचः ॥ ६२ ॥ भोभो यादवमहाराज नूनमेष रामानुजमुनिः सदसि वादिवाग्बंध
नमंत्रविद्याविशारदः कमपि मंत्रं प्रयोज्य मूकीकरोत्यस्मान् ॥ ६३ ॥ किंच संप्रति तदीयवा
दस्य समुचितमुत्तरं दातुमक्षमाणामपि प्राचीनवृद्धपरंपराप्रवाददृढतरविस्रब्धहृदयानाम
स्माकमंतरात्मा रामानुजमुनिवादेन किंचिदपि विश्वसित्यंतरेण देवताभिमतिप्रदर्शनम् ॥
॥ ६४ ॥ यदि पुनरेष रामानुजमुनिः स्वकीयवादे देवताभिमतिं प्रदर्शयति ॥ ६५ ॥ तदैव व
यमेतदीयं वादं प्रामाणिकमंगीकरिष्यामो नान्यथा ॥ ६६ ॥ भवांस्तु देशाधिपतिर्बलवान्रा
जा किं वा कर्तुं शक्ष्यति ॥ ६७ ॥ भवति बलात्कारेण रामानुजमुन्यभिमतं निर्वर्त्तयति मंदभा
ग्या अशक्ता वयं राजा हरति सर्वस्वं का तत्र परिवेदनेति न्यायमनुसंदधानास्तूष्णीमुपरता
भविष्यामः ॥ ६८ ॥ ॥ पद्यम् ॥ ॥ इत्थं शैवैरुक्तो यादवराजस्तदाब्रवीच्छैवान् ॥ केवलमूर्खा

न्मत्वा निजकपिमुष्टिं ह्यनिच्छतो हातुम् ॥ ६९ ॥ भोः शैवा इयंतं कालं यथाशक्ति प्रतिवचनदानं कुर्वाणा भवंतोऽद्याऽनन्यगतयो नूनं मंत्रवादकथामहाचूर्णेन मां मोहयितुमुद्यच्छंति ॥ ७० ॥ प्राक्प्रमाणकथासंस्पर्शलेशविधुरेण श्रीवेंकटेशे देवतांतरत्ववादेन केवललिंगाभासमूलेनापूर्वं परिकल्पितेन मां मोहितवंतः संप्रति तदनवकाशेन प्रस्थानांतरेण वंचयितुमुद्यच्छंतो भवंतः समुचितं दंडं ध्रुवमनुभविष्यंति ॥ ७१ ॥ तदद्य सावधानं स्थीयताम् ॥ ७२ ॥ इत्थं शैवान्निर्भर्त्स्य स यादवराजो महापुरुषोयमतिमानुषचेष्टितो योगीश्वरो रामानुजमुनिः शैवोक्तरीत्या स्ववादे देवताभिमतिमपि दर्शयितुं शक्नुयादेव तदेनं चोदयामि यथाच गोपालाङ्गनाचपंडितात्सर्वेऽपि जनाः संप्रत्ययं लभेरन् तथाकर्तुमित्यनुसंदधानस्तामेव रामानुजमुनिं सविनयमवादीत् ॥ ७३ भो रामानुजमुने भवता प्रतिपक्षनिरसनपूर्वकं स्वकीयपक्षः सम्यगेव समर्थितः ॥ ७४ ॥ सुदूरोच्चाटिता च शैवावेशिता मामकी नदेवतांतरशंकापिशाचिका मदतरंगादपुनरावृत्तिः ॥ ७५ ॥ श्रीवेंकटेश्वरदेवतांतरत्ववादः प्रमाणवैदेशिक इति महाविष्णुत्ववाद एव प्रामाणिक इति च शास्त्रैर्न्यायैश्च भवता दृढतरं लंभितविश्रंभोऽहमस्मि ॥ ७६ ॥ भवदभिमतानुरोधेन च सर्वं कार्यं निर्वर्तयामि ॥ ७७ ॥ परंतु महापुरुषोऽतिमानुषचेष्टितो भवान् पंडितपामरसाधारण्येनापि दे

वताभिमतिप्रदर्शनसूचकं सुतृप्तिकरं समाधानोपायं कर्तुं शक्ष्यति चेत्तथापि कर्तुं प्रार्थयामि नै
तावता भवदभिमतं न निर्वर्तयामीति चिंतनेयं तथासति वा जनाः स्वांगीकारेणैव सुदूरं निर
स्ताः स्युरिति तु प्रार्थयामीति विज्ञापयामास श्रीरामानुजमुनिं यादवराजः ॥ ७८ ॥ इ
त्थमभ्यर्थितो रामानुजमुनिः अहो बहुलोपन्यासेनाप्यनुरक्त इव भाति राजा तत इदानीमि
दं कर्तव्यं ब्रह्मांडपुराणैकादशाध्याये कलौ विमानादीनामिव शंखचक्रादिदिव्यायुधानामपि
भक्तकल्पितानां स्वीकरणस्य प्रागेव प्रतिज्ञातत्वादस्मत्परिकल्पितसमर्पितदिव्यायुधानाम
स्वीकारनिर्बंधाभावाच्च प्रसह्य वा संप्रार्थ्य संप्रति प्रसक्तदेवतांतरतापत्तिलक्षणमहानर्थप्रसं
गपरिहाराय शंखचक्रे भगवंतं धारयिष्यामि आश्रितवात्सल्यजलधिर्भक्तपराधीनो भगवान
स्मत्प्रार्थनयाऽवश्यमस्मत्समर्पिते शंखचक्रे स्वयमेव स्वीकुर्यादेव तदिह शंखचक्रे निर्माप्य स
मर्पयाम तद्धारणमेव देवताभिमतिसूचकं सर्वसंप्रत्ययकरं प्रदर्शयामेत्यनुसंदधानो भोराजन्नि
तांतप्रत्ययकरं ममेदं वचनं सावधानमाकर्ण्यतां अहं पुनरेवं देवं श्रीमहाविष्णुं ब्रवीमि एते च
शैवा देवतांतरं ब्रुवंति खल्वहं भगवदसाधारणचिन्हभूतश्रीसुदर्शनपांचजन्यादिदिव्यायुधा
नि निर्माप्य भगवत्संनिधौ स्थापयामि ते च देवतांतरचिन्हभूतपाशांकुशाद्यायुधानि निर्माप्य

स्थापयंतु यानि पुनरायुधानि स देवो गृहीत्वा धारयति तत्तदायुधलांछनो देव एवायमिति नि
श्चेतव्यमिति यादवराजमाबभाषे ततः स यादवराजोऽपि तद्वचनमाकर्ण्य संतुष्टः सन् यद्यप्येवं
भविष्यति तर्हि न कस्यचित्कश्चिदाक्षेपस्तस्मात्तथैव कुर्वंतु द्रुतमुभयेपि वादिन इति संबभाषे॥
॥ २८०॥ ततश्चोभयेपि वादिनः स्वस्वदेवासाधारणचिन्हभूतान्यायुधानि निर्माप्य कस्मिंश्चि
द्दिवसे राज्ञा सह श्रीवेंकटाचलमारुह्य रात्रौ दिव्यालयगर्भगृहे भगवतः सन्निधौ तानि नि
क्षिप्य कवाटबंधनं कृत्वा राजकीयमुद्रां च कारयित्वा प्रभातपर्यंतं दिव्यालयं परितः सावधानं
जागरूका एव संचरंतो विजयाय स्वंस्वं देवं सततमनुचिंतयंत एव अवतस्थिरे ॥ ८१ ॥ भग
वान्रामानुजमुनिरपि स्वयोगमहिम्ना भगवंतं श्रीनिवासमुपसृप्य सम्यक्साक्षात्कृत्य भगव
न्भवत्कृतप्राक्तनप्रतिज्ञानुरोधेन भवदसाधारणशंखचक्रादिदिव्यायुधानि धृत्वास्मान्संरक्षे
ति संप्रार्थयञ्छंखचक्रादिदिव्यायुधधारणमंगीकारयामास ॥ ८२ ॥ ततः प्रभाते यादवरा
जो निर्वर्तिताह्निकस्तादृशैरुभयैर्वादिभिः सह भगवन्मंदिरं गत्वा कवाटमवघाट्यांतः प्रविश्य
भगवंतं श्रीवेंकटनाथं भगवद्रामानुजमुनिभक्तिपाशवशंवदं श्रीसुदर्शनपांचजन्यादिदिव्यायु
धान्येव बिभ्राणं पाशांकुशाद्यायुधानि दूरतो निरस्तवंतं च निरीक्ष्य विस्मयमहार्णवनिर्मग्न

मानसः श्रीरामानुजमुनौ महतीं प्रतिपत्तिमाश्रित्य तदीयनियमेन स्वत एव भग्नदर्पाञ्छैवज नानसत्यार्थवादिनोऽपराधानुगुणं निगृह्य निजराष्ट्रान्निष्कास्य स्वयं श्रीरामानुजमुनिसंनिधौ भगवत्समाश्रयणेन लब्धसत्ताकः संस्तदीयदिव्यचरणनलिनयुगलैकशरणः कृतार्थो बभूव ॥ ॥ ८३ ॥ तदनु श्रीविष्णुतत्त्वप्रतिष्ठापनाचार्यः सकलदेशविख्यातकीर्तिः सभगवान्रामानुजमुनिः श्रीवेंकटाचले श्रीस्वामिपुष्करिणीदक्षिणतीरे विराजमानो देवः श्रियः पतिः श्रीवैकुंठनाथः श्रीमहाविष्णुरेव न तु देवतांतरं मध्ये कंचित्कालं शैवजनैरर्थकामप्रतिष्ठालोलुपैर्निजप्रतारणचातुर्येण राजानं व्यामोह्याऽयं देवो देवतांतरशंकाकलंकमासादितइतीममर्थं सकलदेशविदितं प्रख्याप्य श्रीवैखानसागमोक्तप्रकारेणैव भगवतः श्रीनिवासस्य महासंप्रोक्षणं कारयित्वा यथापूर्वमेव नित्याराधनं निर्वर्तयामास ॥ ८४ ॥ किंच पूर्वसिद्धमेव भगवतः श्रीनिवासस्य श्रीमदानंदनिलयदिव्यविमानं प्रशिथिलायमानं पुनर्नवीकृत्य तस्मिञ्छ्रीवैखानसशास्त्रोक्तरीत्या चतसृषु दिक्षु वराहनारसिंहवैकुंठनाथविमानाधिदैवतानि प्रतिष्ठाप्य विष्णुपरिवारानशेषशेषासनगरुडद्वारपालकादींश्च तेषु तेषु स्थानेषु संस्थाप्य भगवतः श्रीनिवासस्य निरवधिकनित्यैश्वर्यसमृद्धिसिद्धये श्रीमति वक्षसि श्रीमतीं पद्मावतीं देवीं द्विभुजां व्यूहल

क्ष्मीः स्याद्वद्वपद्मासनप्रिया ॥ श्रीनिवासांगमध्यस्था सुतरां केशवप्रियेति वराहपुराणप्रथम
भागांतर्गतैकोनचत्वारिंशांकचिन्हितसप्तमाध्यायोक्तद्विभुजव्यूहलक्ष्मीरूपिणीं वरपद्मासनेसु
स्थां विधाय कमलालयाम् ॥ पद्मावतीं विशालाक्षीं भगवानात्मवक्षसीति भविष्योत्तरपुरा
णत्रयोदशाध्यायांतवचनेन प्रागपीत्थं धृतदयावगम्यमानां शुक्रवारोत्तरफल्गुनीनक्षत्रयुक्ता
यां शुक्लपक्षद्वादश्यां रत्नमालिकायोगे कनकमयकंठिकायां प्रतिष्ठापयामास ॥ ८५ ॥ इत्थं
श्रीवेंकटाचलक्षेत्रं सकलपृथिवीतलवर्तिश्रीविष्णुक्षेत्रमालानायकरत्नभूतं मध्ये राजप्रतारण
परायणैः शैवजनैः कोहनया समाक्रम्य व्याकुलीकृतं कथंचित्तदीयवैयाकुलीमहापाद्मुक्तं कृ
त्वा वैष्णववशंवदीकृत्य निजचरणनलिनयुगलैकशरणं देशाधिपतिं तं च यादवराजं सम्यक्त
त्वार्थबोधनैरनुशिक्षयंस्तेन च श्रीनिवासभगवतस्तत्तत्कालसमुचितानुपचारान्यथारहं कारय
न्स भगवान्रामानुजमुनिः श्रीवेंकटाचलोपत्यकायां श्रीपदनगर्यां कंचित्कालमुवास ॥ ८६ ॥ इ
त्यनंतार्यगुंफितायां श्रीवेंकटाचलेतिहासमालायां श्रीवेंकटनाथभगवतो देवतांतरत्ववादनिर
सनं नाम तृतीयस्तबकः ॥ ३ ॥ ॥छ॥ ॥छ॥ ॥छ॥
तदानीं तत्र निवसन्स भगवान्रामानुजमुनिः श्रीवेंकटनाथस्यानुदिनमभिषेकं क्रियमाणमाल

क्ष्येत्थं नित्याभिषेके भगवद्दिव्यमंगलविग्रहस्य समुचिताः सर्वोपचाराः संपूर्णा यथावन्ननिर्व
र्तन्ते तस्मात्तदातदा सकृत्सकृदेव देवस्य विशेषाभिषेको निर्वर्तयितुमुचितः तत्रचासह लक्ष्म्या
भिषेकस्तु वासरे भार्गवे हरेः॥ सांनिध्यकारी सततं सर्वसंपत्प्रदायक इति श्रीवैखानसशास्त्रा
नंदसंहितावचनेन प्रतिभार्गववासरमभिषेकस्य विशेषाभ्युदयहेतुत्वावगमाद्भविष्योत्तरपुरा
णचतुर्दशाध्याये कूर्मद्विजवृत्तान्ते॥पूर्वदेवगुरोर्वारः संप्राप्तस्तु गते दिने॥ तद्दिने वेंकटेशस्य प्र
सक्तमभिषेचनं॥तद्दर्शनार्थं मे कन्याः सर्वा जग्मुर्महीसुर॥ताभि स्समेता ते भार्या पुत्रीपुत्रसम
न्विता॥जगाम वेंकटं शैलंदेवदर्शनकारणादिति तोण्डमान्नृपेणकूर्मद्विजं प्रत्यभिधानदर्शनेनकू
र्मोऽपि श्रीनिवासस्य भार्गववासराभिषेकनैयत्यस्थितेरवगमाच्चेतःप्रभृति प्रतिभार्गववासरमे
व श्रीनिवासस्य लक्ष्म्या सह विशेषाभिषेको नियमतो निर्वर्तनीय इति व्यवस्थापयामास॥१
स भगवान्रामानुजमुनिः पुनरित्थमपि व्यवस्थापयामास अष्टमीन्दुकलाधारललाटस्थोर्ध्व
पुण्ड्रक इति पाद्मपुराणभागस्थसप्तविंशांकचिन्हितचतुर्थाध्यायवचनेन भविष्योत्तरपुराणे स
प्तमाध्याये॥ आदर्शालोकिते वक्त्रे धृत्वा शुभ्रां च मृत्तिकाम्॥तन्मध्ये कुंकुमेनापि तिलकं सुम
नोहरमिति भगवतःश्वेतमृत्तिकोर्ध्वपुण्ड्रधारणप्रतिपादनपरवचनेनाऽदर्शे मृत्तिकां शुभ्रां तथा

कुंकुमभाजनं॥स्वर्णनिर्मितवस्त्रेण बध्वातु कटिमध्यत इति गन्तव्यप्रदेशेऽप्यूर्ध्वपुण्ड्रधारणार्थं द्रव्यनयनपरेण च वचनेन॥एवं तत्रैव पुराणेएकादशाध्याये।अष्टमीन्दुकलाकारे ललाटे दर्पण स्फुटे॥ उर्ध्वपुण्ड्रं दधाराथ श्रीनिवासः सतां गतिः ॥ समूलरेखाद्वितयं श्वेतमृतिकया स्वयम् ॥ तदाह कमलां राजन्बकुला लोकमातरम् ॥ रेखां रचय कल्याणि ललाटे कुंकुमेन तु ॥ एवमुक्ता देवमात्रा रमा कुंकुमरेखिकाम् ॥ समूलयोरूर्ध्वपुण्ड्ररेखयोरन्तरेलिखत् इति वचनैश्च श्रीश्रीनिवासभगवत ऊर्ध्वपुण्ड्रधारिताया अवगमेन तद्धारणे शैवजनानांस्वाभिमतदेवता दृष्टिनिवाससंभवेन चेयंतं कालं देवतान्तरशंकाकलंकितस्य श्रीश्रीनिवासभगवतो दर्शनदशायामेव श्रीविष्णुताप्रत्यभिज्ञापकमूर्ध्वपुण्ड्रं धारयितव्यम् ॥ २ ॥ तच्चोर्ध्वपुण्ड्रं नासिकामूलाभिव्याप्तार्धेन्दुमण्डलाकारमूलं तदुपर्याकेशान्तोर्ध्वनिःसृतसुधाधाराद्वयाकारसान्तरालविपुलतरधवलरेखाद्वितययुतं विशुद्धतरघनतरसुगंधिघनसारचूर्णमयं धारयितव्यम् ॥ ३ ॥ अष्टमीन्दुकलाधारललाटस्थोर्ध्वपुण्ड्रक इति प्रागुदाहृतपाद्मपुराणवचने आधारशब्दार्थस्योर्ध्वपुण्ड्रमूलस्याष्टमीन्दुकलातुल्यत्वाभिधानादष्टमीन्दुकलाया अर्धीकृतसंपूर्णपूर्णिमाचन्द्रसमानाकारत्वाच्च भ्रूमध्यादधस्तान्नासिकामूलेऽर्धेन्दुमण्डलाकारं निरंतरालमूर्ध्वपुण्ड्रस्य मूलं कल्पनीयं।

॥४॥तदुपर्याकेशांतधार्योर्ध्वपुंड्रभागस्य सान्तरालरेखाद्वितयात्मकत्वाभिधानाद्भ्रूमध्यप्रभृति सान्तरालं नासिकामूलधृतमूलंभागादूर्ध्वनिःसृतं रेखाद्वयं च कल्पनीयम् ॥ ४ ॥ प्रागुदाहृतायामेकांगुलं फालतल ऊर्ध्वस्य मूलं तदुत्पन्ने द्वे शाखे तथैव मध्येऽवकाशोंऽगुलादन्यून इत्यादिरूपायां कात्यायनीयश्वेतमृदूर्ध्वपुण्ड्रोपनिषद्यपि मूलस्य द्विरेखात्मकत्वानभिधानान्मूलादुपरितनोर्ध्वपुण्ड्रभागस्यैव शाखाद्वयात्मकताया अंगुलान्यूनशाखाद्वयमध्यान्तरालतायाश्च विधानाच्च मूलं निरंतरालं तदुपरितनभाग एव सान्तराल इति यथोक्तांश एव प्रतिपन्नो भवति ॥५॥ एवं आरभ्य नासिकामूलं ललाटान्तं लिखेन्मृदम्॥समारभ्य भ्रुवोर्मध्यमन्तरालं प्रकल्पयेत् ॥ अन्तरालं द्व्यंगुलं स्यात्पार्श्वावंगुलिमात्रकाविति पूर्वोदाहृतपाद्मोत्तरखण्डैकत्रिंशांकचिन्हिततृतीयाध्यायगतवचनेपि नासिकामूलमारभ्य ललाटान्तपर्यन्तमूर्ध्वपुण्ड्रस्य धारितायास्तत्र भ्रूमध्यप्रभृत्येवान्तरालस्य कल्पनीयतायाश्चाभिधानान्नासिकामूलमारभ्य भ्रूमध्यपर्यन्तं धृतमूर्ध्वपुड्रस्य मूलं निरंतरालं तदुपरितनोर्ध्वपुण्ड्रभाग एव सांतराल इति यथोक्तांश एव सुस्पष्टोऽवगम्यते ॥ ६ ॥ प्रागुदाहृतकात्यायनीयश्वेतमृदूर्ध्वपुण्ड्रोपनिषद्येकांगुलं फालतल ऊर्ध्वस्य मूलमित्यत्र फालतलशब्दःफालाधःप्रदेशभूतनासिकामूलपरः तलशब्दस्या

धःप्रदेशपरत्वाद्वचनान्तरैककण्ठ्याच्च ॥ ७ ॥ नासिकामूलमारभ्य धार्यत्वं सान्तरालद्विरेखा
त्मकत्वं चोर्ध्वपुण्ड्रस्य सर्वतः प्रसिद्धम् ॥ ८ ॥ अत एवोक्तं भारद्वाजसंहितायां ॥ आचम्य धा
रयेत्पुण्ड्रान्पूर्ववच्छुभ्रया मृदा ॥ आरभ्य नासिकामूलमाकेशान्तं प्रकल्पयेत् ॥ नासिकायास्त्रि
भागस्तु नासिकामूलमिश्रिते ॥ हारिद्रेण तु चूर्णेन कुंकुमेन सुगंधिना ॥ ऊर्ध्वपुण्ड्रस्य मध्येतु
लक्ष्मीस्थानं प्रकल्पयेदिति ॥ ९ ॥ वैखानसागमेप्युक्तं ॥ नासिकामूलमारभ्य रेखाद्वितयसंयु
तम् ॥ धारयेदूर्ध्वपुण्ड्रं तु हरेः फालतले शुभ इति ॥ १० ॥ पराशरसंहितायामप्यूर्ध्वपुण्ड्रवि
धानप्रकरणे उक्तं ॥ नासादौ द्व्यंगुलं पादं मध्यं सार्धांगुलं भवेत् ॥ पार्श्वावंगुलमात्रौ तु सुस्पष्टं
धारयेद्द्विज इति ॥ ११ ॥ एवंजातीयमन्यदपि प्रमाणजातं तत्रतत्र स्थितमुदाहार्यम् ॥ १२ ॥
अत्र सर्वत्रोर्ध्वपुण्ड्रस्य नासिकामूलमारभ्य धार्यत्वं सान्तरालरेखाद्वयात्मकत्वं चैकरूपमुक्तम्
॥ १३ ॥ तत्र नासिकामूलधृतमूर्ध्वपुण्ड्रस्य मूलमाच्छिद्रं तदुपरितनभाग एव सान्तरालरेखा
द्वितयात्मक इत्येव सर्वत्राभिप्रेतं बोध्यं॥दर्शितकात्यायनीयश्रुतिपाद्मोत्तरखण्डपराशरसंहिता
दिवचनैककण्ठ्यात् ॥ १४ ॥ ऊर्ध्वपुण्ड्रमूलदैर्घ्यं तु एकांगुलादन्यूनमंगुलद्वयादनधिकं नासि
कामूलमभिव्याप्तं बोध्यं ॥ दर्शितकात्यायनीयश्रुतिपराशरसंहितावचनपाद्मोत्तरखण्डवचना

नामैकार्थ्यात् ॥ १५ ॥ सर्वेषां वस्तूनां मूलमध्यपर्यन्तात्मना विभागमभिसंधाय दर्शितभार
द्वाजसंहितायां नासिकायास्त्रिभागस्तु नासिकामूलमिश्रित इति नासिकातृतीयांशरूपत्वं ना
सिकामूलस्याभिदधता भरद्वाजेन नासिकायां त्रिधाविभक्तायामधोभागद्वयमुत्सृज्य तदुपरि
प्रभृत्यूर्ध्वपुण्ड्रस्य धार्यत्वमभिहितम् ॥ १६ ॥ त्रिभागशब्दस्य त्रिषु भागस्त्रिभाग इति विगृ
हीतस्त्रिष्वन्यतमं भागमाचष्टे ॥ १७ ॥ तथाचोर्ध्वपुंड्रस्य दैर्घ्यवैशाल्यवन्मूलदैर्घ्यमपि तत्तदव
यवसन्निवेशानुगुण्येन चारुतातिशयानुगुण्येन च तत्तत्स्थलानुगुणं ललाटे तु नासिकामूलान
तिलंघि च कल्प्यमित्यभिप्रेतमेकांगुलद्व्यंगुलादिपरिमाणभेदनासिकामालाभिव्याप्तत्वयोः प्र
तिपादनानुरोधादूर्ध्वपुण्ड्रशास्त्रेषु॥ऊर्ध्वपुण्ड्रमृजुं सौम्यंसुपार्श्वंसुमनोहर मित्यादिनोर्ध्वपुंड्रस्य
ऋजुत्वसौम्यत्वसुपार्श्वत्वसुमनोहरत्वादिमात्रस्यात्यंतावश्यकताप्रतिपादनानुरोधाच्च ॥ १८ ॥
यथोक्तरूपमूर्ध्वपुंड्रस्य मूलं तरुस्कंधाकारवत्प्रफुल्लपद्माकारवच्चार्धेंदुमंडलाकारमपि संभव
तीत्यभिप्रायेणैवाष्टमींदुकलाधारललाटस्थोर्ध्वपुंड्रक इत्यभिहितम्॥ १९ ॥ अष्टमींदुकलाका
रेति पाठे तु ललाटस्य तद्विशेषणं नोर्ध्वपुंड्रस्य सच्छिद्रस्योर्ध्वपुंड्रस्य पौर्णिमाचंद्रमंडलार्धस
मानाकारेणाष्टमींदुबिंबेनाऽच्छिद्रेणसमाकारत्वासंभवात् ललाटस्यैवाष्टमींदुबिंबाकारतावर्णन

स्य प्रसिद्धत्वात्समानप्रकरणस्थत्वेनाष्टमींदुकलाकारे ललाटेदर्पणस्फुटे ऊर्ध्वपुंड्रं दधाराथश्री
निवासः सतां गतिरित्यादिप्रागुदाहृतभविष्योत्तरपुराणैकादशाध्यायवचनेनैककंठ्याच्च ॥२०
उक्तं च वराहपुराणद्वितीयभागेचतुर्थाध्याये पद्मावत्यवयवसुलक्षणान्यभिदधता नारदेन॥अ
कलंकाष्टमीचंद्रसदृशोऽतिमनोहरः॥दृश्यतेऽयं ललाटस्ते नीलालकसुशोभित इति ललाटस्या
ष्टमीचंद्रतुल्याकारत्वम्॥२१॥ईदृशपाठपक्षेपि यथोक्तसमूलसांतरालरेखाद्वयात्मकमेवोर्ध्वपुंड्रं
श्रीनिवासस्य धारयितव्यं उदाहृतश्रुत्यादिप्रामाण्यादुदाहृतभविष्योत्तरपुराणैकादशाध्याय
वचनप्रामाण्याच्च ॥ २२ ॥ यद्यपि हरिद्राचूर्णरेखया मध्यस्थया सह त्रिरेखं समूलमूर्ध्वपुंड्रमेव
दर्शितप्रमाणसिद्धं श्रीनिवासेनापि तादृशमेव पुंड्रं धृतमिति च दर्शितभविष्योत्तरपुराणवचन
सिद्धं तथापि द्विरेखोर्ध्वपुंड्रस्यापि बहुप्रमाणसिद्धत्वादीदृशपुंड्रस्य सेत्राक्रमणपूर्वकालपर्यंतं
धार्यमाणताया वृद्धैरभिधीमानत्वाच्च तादृशपुंड्रधारणमपि न दोषायेति बोध्यम्॥२३॥ एवमूर्ध्व
पुंड्राणां कर्मांगालंकारादिरूपाणां नानाविधाकाराणां कस्तूरीकर्पूरश्वेतमृत्तिकागोपीचंदनमु
क्ताहेमरजतादिरूपाणामूर्ध्वपुंड्रद्रव्याणां च शास्त्रसिद्धत्वात्तत्तद्देशकालानुगुणं चारुतानुगुणं च
तदा तदा तत्तद्द्रव्यैरूर्ध्वपुंड्रधारणं भगवतस्तद्देशकालसंभवानुरोधेन कर्तुमुचितमित्यपि बो

ध्यं॥२४॥ तस्मात्संप्रति श्रीनिवासभगवतो देवतांतरशंकाकलंकितस्य द्रष्टॄणां तादृशकलंकपरिहारायशैवजनक्रमणपूर्वकालपर्यंतस्थितरीत्यानुगुण्येन समूलसांतरालरेखाद्वितयात्मकं यथोक्तरूपमूर्ध्वपुंड्रं घनतरघनसारचूर्णमयं प्रस्फुटं सदाधारयितव्यमिति॥२॥ततश्च स भगवान्रामानुजमुनिरनुपदमेव समागतेभार्गववासरेऽभिषेकसमये श्रीनिवासभगवद्दिव्यललाटे समर्पितयोर्द्वयोरप्यूर्ध्वपुंड्ररेखयोः प्रमुषितयोरपि तन्मूलभूतेऽर्धचंद्राकारशालिनि नासिकामूलधृतोर्ध्वपुंड्रभागे परमनपमृष्टे तदवलोकयन्पूर्वं परिगृहीतजगन्मोहिनीवेषस्याऽस्य अर्धचंद्राकृतिस्त्रीणां धार्यं पुंड्रं भ्रुवोरध इति वसिष्ठसंहितावचनेन तदानींतनदशानुगुणमीदृशमूर्ध्वपुंड्रं यथातत्रत्यसकलदेवासुरव्यामोहजनकमासीत् तथा निखिलजगन्मोहनदिव्यमंगलविग्रहशालिनोऽस्य श्रीनिवासस्यनासिकामूले विराजमानप्रमुषितोपरितनरेखाद्वितयमर्धेंदुमंडलाकारमिदमूर्ध्वपुंड्रमूलमतिशयितशोभावहमाश्रितजनदृष्टिचित्तापहारि च विलोक्यते तदस्य भगवतएतावन्मात्ररूपमप्यूर्ध्वपुंड्रं कंचित्कालंधारयितव्यमिति परिचिंतयंस्तथैवभगवताप्यकस्मादेवार्चकमुखेन नियमितःसंस्ततोऽभिषेके निवृत्ते यथोक्तरीत्या कर्पूररेणुभिःसमूलरेखाद्वयात्मकमूर्ध्वपुंड्रनासिकामूलप्रभृत्याकेशांतं ललाटे धारयित्वा तदनु इतःप्रभृति शुक्रवारमारभ्य दि

नत्रयमीदृशरीत्यैवोर्ध्वपुंड्रं धारयितव्यं तदनंतरं॥आदौ कृतयुगे जंबूद्वीपे भारतवर्षके॥गंगाया
दक्षिणे भागे योजनानां शतद्वये॥पंचयोजनमात्रे तु पूर्वांभोधेस्तु पश्चिमे॥मासे भाद्रपदे विष्णु
तिथौ विष्णुसमन्विते ॥ सिद्धयोगे सोमवारे गिरौ नारायणाह्वये॥स्वामिपुष्करिणीतीरे पश्चिमे
भूत्यपश्चिमे ॥ वृंदारकाणां वृंदैस्तु प्रार्थितो लोकरक्षकः ॥ आविर्बभूव भगवाञ्छ्रीनिवासः परः
पुमानिति त्रयस्त्रिंशांकचिन्हितपाद्मपुराणदशमाध्यायस्थश्रीनिवासाविर्भावकालप्रतिपादन
परघट्टवचनेषु श्रीवेंकटनाथदिव्यावतारवारतयाऽवगतसोमवासरप्रभृतिदिनत्रयमुपरितनरे
खाद्वयविधुरमर्धेंदुमंडलाकारं नासिकामूलधृतमूर्ध्वपुण्ड्रमूलं परमवस्थाप्य तदूर्ध्वं ललाटे हा
रिद्रश्रीकुंकुमचूर्णरेखामृज्वीं ललाटकोटिधृतनवरत्नखचिततिरश्चीनलालाटिकपट्टबंधाख्यदि
व्यभूषणस्पृशं दीर्घां तादृशभूषणां नासिकामूलपर्यंतं व्यालंबमानाभ्यां विशुद्धस्थूलमुक्ताफल
सरमयीभ्यामुभाभ्यां रेखाभ्यामलंकृतपार्श्वद्वयामापादतोवलोकने समूलत्रिरेखोर्ध्वपुण्ड्रसद्भा
वदशाशोभामेवावहंतीं धारयित्वा तादृशस्त्रीदशानुगुणं शीतलतमद्रव्यमयमंजनमपि भगवद्दि
व्यलोचनयोःसमर्पणीयं तदनु गुरुवारे परजनाभिषेककरणौपैकतया सकलदिव्याभरणादिप्र
त्यवरोपणं कृत्वा भगवतो ललाटे सुवर्णप्रत्युप्तविशुद्धहीरकमणिजालमयसमूलरेखाद्वयं श्रीचू

र्णरेखास्थानीयमध्यस्थितकनकस्थगितदीर्घतरकुरुविंदरेखं दिव्याभरणरूपमेव समूलत्रिरेखोर्ध्वपुण्ड्रं धारयित्वा सकलदिव्यावयवसर्वदिव्याभरणस्थाने पुष्पकवचमेकं ललाटेतरसकलदिव्यावयवाच्छादकं समर्पणीयं तदनु शुक्रवारे प्रातर्ललाटस्थं दिव्याभरणरूपमूर्ध्वपुंड्रं तदितरसर्वावयवाच्छादकं पुण्यकवचं चावतार्य ललाटे श्वेतमृत्तिकामयसमूलरेखाद्वयं श्रीचूर्णमयमध्यरेखमूर्ध्वपुंड्रमधरोर्ध्वकाययोः परिधानोत्तरीयरूपं सूक्ष्मवस्त्रयुगलं धारयित्वा प्रथमाराधनं निर्वर्त्य ततोमध्यान्हेभिषेकं कारयित्वा पुनर्यथोक्तरीत्या घनतरघनसारचूर्णमयं समूलद्विरेखात्मकमेवोर्ध्वपुंड्रं धारयितव्यं दिव्याभरणमयं यथोक्तरूपमूर्ध्वपुंड्रं तु ललाटदिव्यशोभाकरं तदातदा वैशेषिकमहोत्सवकालेष्वपि भगवतो धारयितव्यं दीपशिखाद्याकारं कस्तूरिकोर्ध्वपुंड्रादिकं तूत्सवबेरादीनां धारयितव्यमिति व्यवस्थामारचयामास ॥ ३ ॥ एवं पुनरपि स भगवान्रामानुजमुनिः शूराणां निजशौर्योपकरणभूतानि निजायुधानि चंदनकुसुमादिभिरलंकृत्यानंतरमेव तैः स्वालंकारांगीकारन्यायेन भगवतः श्रीनिवासस्यापि तिसृष्वपि संध्यासु चंदनकुसममालादिभिरभ्यर्चनसमये प्रथमं तदीयविजयपरंपराप्रधानसाधनभूतानां श्रीमत्सुदर्शनपांचजन्यदिव्यचरणारविंदादीनामलंकारं कृत्वा पश्चाद्वक्षोनिलयकनक

कंठिकालयपद्मावतीदेव्यास्ततः किरीटस्य ततो दिव्यावयवानां च चंदनकुसुममालादिभिर
भ्यर्चनं कार्यमिति च व्यवस्थां चकार ॥ ४ ॥ एवं प्रतिशुक्रवारं भगवदभिषेकानंतरं भगवद्वक्षो
निलयायाः कनकमयकंठिकालयायाः श्रीपद्मावतीदेव्या अभिषेकार्थं वक्षःस्थलादवतरणस
मये नित्यानपायिन्यास्तस्याः क्षणकालमपि भगवद्वक्षोविश्लेषासहिष्णुताशीलमनुसंधाय स
भगवान्रामानुजमुनिस्तदपरावतारभूतभूदेव्यंशावतीर्णश्रीगोदादेवीप्रणीतस्य भगवद्विश्लेष
कालविनोदनोपायवैखरीप्रतिपादनपरस्य त्रिचत्वारिंशदुत्तरशतगाथस्य गोदाश्रीसूक्तनाम्नो
दिव्यप्रबंधस्यानुसंधानं तदानींतनविश्लेषखेदापनोदनोपायतया नियतं कर्तव्यमित्यपि व्य
वस्थामकार्षीत् ॥ ५ ॥ अनंतरं स भगवान्रामानुजमुनिस्तत्रत्यवृद्धैः कथितामस्य श्रीवेंकटाद्रि
दिव्यदेवसंस्थानस्य दुर्भेदकाननपाषाणमयस्य विस्तीर्णदिव्यनगरनिर्माणायोग्यतया किं
चित्कालात्पूर्वं द्रुमकुठारनाम्ना केनचिद्भक्तेन भगवद्दीव्यालयप्राकारं परितः शिलाद्रुमदंतुरा
न्प्रदेशान्कथंचित्समीकृत्य लघ्वीं कांचिद्वेदीं निर्माय भगवत्कैंकर्यपराणां निवासस्थानं परं प
रिकल्पितं भगवतो महोत्सवेषु दिव्ययात्रायोग्या नगरी वा तद्गता महती परितो विधिर्वा नेह
निष्पादिता ततो भगवतो महोत्सवादिकरणस्य तु नात्रावकाशः अतो हेतोरत्रत्याः प्रांचो रा

जानः देवस्थाने तु परितो विशिखाकरणाक्षमे ॥ समीपे तु पुरीं कृत्वा तत्र देवोत्सवं चरेदित्या
दिवैष्णवागमोक्तरीत्या श्रीवेंकटनाथस्य ब्रह्मोत्सवारंभेऽकुरार्पणपूर्वकध्वजारोहणसमनंतरं
श्रीवेंकटगिरेरुपत्यकास्थायां श्रीशुकपुरीनामधेयायां राजधान्यामवरोहितस्य तत्राष्टसु दिने
षु सायंप्रातर्विधिषु सवाहनयात्रागर्भमविकलसकलोपचारगर्भं च महोत्सवं निर्वर्त्य नवमदि
वसे प्रातर्मांगलिकावभृथस्नानांतमुत्सवशेषं च यथाविधि निर्वर्त्य ततः सायं सपरिवारं श्रीवें
कटगिर्यारोहणं कारयित्वा ध्वजावरोहणपुष्पयागादिकं तु तत्रैव निरवर्तयंस्ततःप्रभृति भगवत
उत्सवो गिरेरधस्तादेव निर्वर्त्यत इति कथामाकर्ण्य समाकुलमनाः प्राक्तुर्मुखतोंडमांश्चक्रवर्ति
प्रभृतिभिरिवाद्यतनैरप्यस्मिन्गिरावेव सावभृथं भगवत उत्सवादिकं निर्वर्तनीयमिति परिचिं
त्य भगवद्दिव्यालयं परितः सर्वत्र विषमस्थलानि समानि कारयित्वा दिव्यनगरीं निर्माप्य तत्र
प्रासादमालापरिष्कृतोभयश्रेणीर्महोत्सवदिवसेषु सवाहनभगवद्दिव्ययात्रायोग्याः परितश्च
तस्मृर्महतीर्विशाखाः कल्पयित्वा स्वामिपुष्करिण्याः पूर्वस्मिंस्तीरे दक्षिणोत्तरां क्रोशपरिमा
णां महतीं कांचिद्वीधिं तत्पूर्वभागे चतुरस्रामपरां वीधिं च मृगयोत्सवयात्रायोग्यां निर्माप्य गि
रावेव सर्वमुत्सवादिकं निर्वर्तयामास ॥६॥ एवं तदानीमुत्सवबेरतया आराध्यमानस्य वेंकटवा

सिनाम्नो भगवद्दिव्यमंगलविग्रहस्यावतारदिनवैभवं दिव्यनगराभिवृद्धेः कनकलतायोगाव
तीर्णश्रीश्रीनिवासोत्तरोत्तरदिव्यैश्वर्याभिवृद्धेश्च प्रतिरोधकमिति प्रसिद्धमहतीयं वृद्धजनमु
खादाकर्ण्य तदानीं कौतुकबेरतयाराध्यमानसशैलेशनाम्नो भगवद्दिव्यमंगलविग्रहस्योत्सवबे
रस्थानाभिषेकं प्रागुक्तस्य वेंकटवासिनाम्नो भगवद्दिव्यमंगलविग्रहस्य कौतुकबेरस्थाना
भिषेकं च कारयित्वा प्राणधारणादिपूर्वकं यथाविधिं प्रतिष्ठां च कारयित्वा यथाशास्त्रं तयोरारा
धनामपि श्रीरामानुजमुनिर्निर्वर्तयामास ॥ ७ ॥ एवं निजसंनिधौ पंचसंस्कारस्वीकरणपूर्वक
भगवत्समाश्रयणलब्धपारमैकान्त्यस्य श्रीवैखानसतंत्रसारपारदृश्वनो बिंबाधरनाम्नो भाग
वतोत्तमस्यार्चकवर्यस्य वंशस्थैरेव भगवतः श्रीवेंकटनाथस्य नित्याराधनं निर्वर्तनीयमित्यपि
योगीश्वरो व्यवस्थापयामास ॥ ८ ॥ इत्थं यथाशासनं निर्वर्तनबद्धश्रद्धेन निजांतरंगकिंकरेण
यादवराजेन यथामनोरथं श्रीवेंकटनाथसर्वविधकैंकर्यनिर्वाहधुरंधरस्ततः संजातनिरवधिक
संतोषैः सर्वैरपि भागवतवृद्धैः॥ शेषो वा सैन्यनाथो वा श्रीपतिर्वैदसालिकैः॥ सर्वैरपि वितर्क्या
य यतिराजाय मंगलम् ॥ १ ॥ शुद्धैर्भागवतैः शिष्यैरंतरंगैश्च किंकरैः ॥ सम्यग्विदिततत्त्वाय य ॥ ५१ ॥
तिराजाय मंगलम् ॥ २ ॥ श्रीवेंकटाचलक्षेत्रशैवापन्मोक्षकारिणे ॥ विष्णुपारिषदेशाय यतिरा

जाय मंगलम् ॥ ३ ॥ श्रीवेंकटाचलेशस्य शंखचक्रप्रदायिने ॥ तदाचार्याय तस्यास्तु यतिराजाय मंगलम् ॥ ४ ॥ श्रीमद्वैष्णवसिद्धांतरक्षणे सर्वतः क्षितौ ॥ बद्धदीक्षाय गुरवे यतिराजाय मंगलम् ॥ ५ ॥ कुदृष्टिकुहनाक्रांतवेदांतापद्विमोक्षिणे ॥ श्रीरामानुजसंज्ञाय यतिराजाय मंगलम् ॥ ६ ॥ विशुद्धब्रह्ममीमांसाकुदृष्टिकलितापदाम् ॥ निवर्तकाय निर्मूलं यतिराजाय मंगलम् ॥ ७ ॥ मूर्ताय दिव्यसूरीणां प्रवृत्ताय कलौ हितौ ॥ महाकृपाप्रवाहाय यतिराजाय मंगलम् ॥ ८ ॥ अनेकेष्ववतारेष्वप्यनिर्वृत्तं हरेर्मतम् ॥ क्षणेन निर्वर्तयते यतिराजाय मंगलम् ॥ ९ ॥ अशेषलोकवंद्याय गुरवे शेषमूर्तये ॥ श्रीमद्रामानुजायास्तु यतिराजाय मंगलम् ॥ १० ॥ इत्येवं सादरं संतःविरचितमंगलाशासनः। पाषंडद्रुमषंडदावदहनश्चार्वाकशैलाशनिर्बौद्धध्वांतनिरासवासरपतिर्जैनेभकंठीरवः ॥ मायावादिभुजंगभंगगरुडस्त्रैविद्यचूडामणिः श्रीरंगेशजयध्वजो विजयते रामानुजोऽयं मुनिः ॥ १ ॥ पाषंडषंडगिरिखंडनवज्रदंडाः प्रच्छन्नबौद्धमकरालयमंथदंडाः ॥ वेदार्थसारसुखदर्शनदीपदंडा रामानुजस्य विलसंति मुनेस्त्रिदंडाः ॥ २ ॥ चारित्रोद्धारदंडं चतुरनयपथालंक्रियाकेतुदंडं सद्विद्यादीपदंडं सकलकलिकथासंहृतेः कालदंडम् ॥ त्रय्यंतालंबदंडं त्रिभुवनविजयच्छत्रसौवर्णदंडं धत्ते रामानुजार्यः प्रतिकथकशिरोवज्रदं

डं त्रिदंडम् ॥ ३ ॥ त्रय्या मांगल्यसूत्रं त्रियुगयुगपथारोहणालंबसूत्रं सद्विद्यायंत्रसूत्रं सगुण
नयविदां संपदां हारसूत्रम् ॥ प्रज्ञासूत्रं बुधानां प्रशमधनमनः पद्मिनीनालसूत्रं रक्षासूत्रं यती
नां जयति यतिपतेर्वक्षसि ब्रह्मसूत्रम् ॥ ४ ॥ पाषंडसागरमहावडवामुखाग्निः श्रीरंगराजचर
णांबुजमूलदासः ॥ श्रीविष्णुलोकमणिमंडपमार्गदायी रामानुजो विजयते यतिराजराजः ॥
॥ ५ ॥ इत्येवं समंततः संजोघुष्यमाणविरुदावलिर्वैदिकसार्वभौमो भगवान्रामानुजमुनिः। शु
काद्या मुनयः केचिद्भृग्वाद्याश्च तपोधनाः ॥ प्रल्हादप्रमुखाः पुण्या अंबरीषादयो नृपाः ॥ वि
ष्णोरेवापरं देवं मन्वानास्तं नगोत्तमम् ॥ पद्भ्यामाक्रमितुं भीताः पर्यंतेष्वेव वर्तनाः ॥ तन्निर्गत
नदीष्वेव कुर्वाणाः स्नानतर्पणे ॥तपः कुर्वंति वांछंतः साक्षात्कर्तुं जनार्दनमित्येकविंशांकचिह्नित
वामनपुराणभागद्वितीयाध्यायवचनेषु परावरतत्त्वविदग्रेसराः शुकादयः परमयोगिनः प्र
ल्हादादयः परमभागवता अंबरीषादयो महाभागवतराजर्षयश्च श्रीवेंकटगिरौ तत्र विराज
माने भगवति च समानप्रतिपत्तिं कुर्वाणाः प्राकृतेन निजशरीरेण तत्रापि पद्भ्यां च तादृशगिरि
संस्पर्शमसहमानाः पर्यंतेष्वेव तपः कुर्वंतो वर्ततइति प्रतिपादनाद्भगवन्निर्हेतुककृपासागरपारि
वहलब्धदिव्यज्ञानेन निवृत्तविघ्नेषु श्रीपरांकुशपरकालादिदिव्यसूरिष्वपि श्रीपरांकुश दिव्य

सूरिणा श्रीमुखसूक्तनाम्न्यां द्राविडब्रह्मसंहितायां तृतीयकांडतृतीयश्रीमुखसूक्ते सप्तमगाथायां श्रीवेंकटो नः साम्यलक्षणं मोक्षं दद्यान्महानूगिरिरिति अष्टमगाथायां श्रीवेंकटमहाचल एकस्मिन्नेवोपास्यमानेऽस्मदघं विनश्येदिति नवमकांडतृतीयश्रीमुखसूक्ताष्टमगाथायां मुत्तारकेणाधिष्ठितं वेंकटश्लाघ्यायां पृथिव्यामवस्थितमुपगम्य देवा भजमाना इति चाभिधानाच्छ्रीभक्तिसारदिव्यसूरिणा चतुर्मुखश्रीमदंनतादिसंज्ञितनिजद्राविडसंहितायां द्विचत्वारिंशगाथायां गत्वा प्रणमत नितरामुत्तुंगवेंकटं स्थिरीभूय पापहरं शीलेनेति पंचचत्वारिंशगाथायां शिशिरनिर्झरो वेंकट एव परमपदवासिनां भूवासिनां च परमप्राप्य इति अष्टचत्वारिंशगाथायां वेंकट एवपरमपदवासिभिः परमप्राप्यतयोपास्यमानः वेंकट एव च सत्यपापव्याधिनिवर्तनकारीतिचाभिधानाच्छ्रीकलिवैरिदिव्यसूरिणा श्रीसूक्ताख्यनिजद्राविडसंहितायां प्रथमकांडेऽष्टमश्रीसूक्ते नवसु गाथासु श्रीवेंकटं भजमन इत्यभिधानादेवमेवानेकस्थलेषु प्रायशः सर्वैःसूरिभिर्वेंकटाचलस्यैवप्राप्यत्वप्रतिपादनेन च दिव्यसूरयोऽपि श्रीवेंकटगिरिं तत्र वसंतं भगवंतं च तुल्यतया प्राप्यं प्रापकं च मन्वानाः प्राकृतशरीरेण श्रीवेंकटगिरिः पद्भ्यां न स्प्रष्टुमर्हइत्येवं मत्वैवं तं गिरिमनारोहंत एव मंगलाशासनमकार्षुरित्यवगमनाच्च श्रीवेंकटगिरेरधित्यका

यां श्रीपरांकुशादिदिव्यसूरीणां प्रतिष्ठापने तेषामेवाऽभिसंध्यभावं निश्चित्य तदुपत्यकायामेव श्रीपदपुर्यां प्रत्येकशो दिव्यालयेषु श्रीवेंकटनाथाभिमुखांस्तदीयमंगलाशासनैकपरायणांस्तान्दिव्यसूरीनपि यथाविध्यर्चारूपेण प्रतिष्ठापयामास ॥९॥ एवं ततः किंचित्कालात्पूर्वमनेकजन्मार्जितपापपरंपरापरवशेन निजशैवमतदुरभिमानसांम्राज्यतः स्वराष्ट्रभूते चोलदेशे समंततोऽनेकविष्णुक्षेत्रप्रदोहं कृतवता तत एव कर्मपरिपाकात्संजातस्यसक्रिमेर्महतः कंठे गडोवेंगतो विपन्नेन तत एव क्रिमिकंठनाम्ना विख्यातेनाव्यपदेशेन चोलराजेन स्वकृतविष्णुक्षेत्रप्रदोहमहाप्रबलसमये श्रीकावेरीतीरवर्तिनःकण्वमहामुनितपश्चर्याफलभूतप्रत्यक्षप्रादुर्भावश्रीगोविंदराजभगवत्क्षेत्रस्य चित्रकूटाभिधानस्यापि प्रदोहे प्रसक्ते कांदिशीकैः कतिपयश्रीवैष्णवैः श्रीगोविंदराजभगवदुत्सवमूर्तिभूतं देवाधिदेवं परं परिपाल्यानीय तदाप्रभृति श्रीवेंकटगिरेरुपत्यकायां श्रीपदपुर्यामाराध्यमानं तन्मूलमूर्तिभूतं श्रीगोविंदराजाभिधानं भगवंतं श्रीचित्रकूटाधिनाथं क्षीरार्णवशायिनंनीलमहार्णवतीर्थशायिनं च कृतंसमाकर्णयन्सभगवान्रामानुजमुनिःपुराणप्रसिद्धं श्रीकुलशेखरकलिवैरिदिव्यसूरिभ्यां कृतमंगलाशासनं श्रीचित्रकूटाख्यंदिव्यक्षेत्रमित्थंनिर्मूलहतं न भवितुमर्हतीति खिन्नमानसो भविष्यति च नूनंतास्मिन्नेव क्षेत्रे

पुनरपि भगवतः प्रादुर्भावः नहि खलु महर्षिदिव्यसूरितपश्चर्यामंगलाशासने आत्यंतिकीं दि
व्यक्षेत्रहानिं सहेयातां संप्रति तु तमेतं भगवंतं श्रीचित्रकूटनाथं श्रीगोविंदराजमिहैव संप्रति
ष्ठापयाम इत्यभिदधानो निजांतरंगाकिंकरं यादवराजमाहूय स्वाभिप्रायं कृत्स्नमावेद्य तं च नी
लमहार्णवतीर्थशायिनं श्रीगोविंदराजाभिधानं देवाधिदेवनाम्न उत्सवबेरस्य मूलबेरभूतं श्री
चित्रकूटाधिनाथं भगवंतं क्षीराब्धिशायिनमपि निगूढमावाह्य श्रीगोविंदराजदेवाधिदेवावुभा
वपि श्रीवेंकटनाथादविशेषं श्रीवैखानसागमोक्तविधिनैव श्रीपदपुर्यां दक्षिणभागवर्तिमहात
टाकपार्श्वे प्रतिष्ठापयामास ॥ १० ॥ स च भगवान्गोविंदराजाभिधानः क्षीराब्धिनाथः श्रीदे
वीभूदेवीसंवाह्यमानदिव्यचरणनलिनयुगलो नाभिकमलाधिष्ठितचतुराननो मधुकैटभाधि
ष्ठितपादपार्श्वः मधुकैटभनिरसनार्थविषज्वालाजालोद्गमनकराविकसद्विनिःश्वसद्वक्रकुहरमाल
प्रोद्यत्फणामंडलशेषाहितल्पे शयानः पृथुलतरदीर्घतरकोटीरप्रमुखदिव्यभूषणभूषितश्चतु
र्भुजः शंखचक्रादिदिव्यायुधधरो दक्षिणभागविन्यस्तमस्तक उत्तरभागविन्यस्तप्रसारितपा
दारविंदयुगलश्च प्रतिष्ठापितः ॥ ११ ॥ इत्थं श्रीरामानुजमुनिनियमितो नारायणपुरवासी दे
शाधिपतिर्यादवराजः स्वाचार्याशासनानुरोधेन श्रीपदपुर्यां दक्षिणभागे महातटाकपार्श्वे मह

ति दिव्यालये यथोक्तरूपं श्रीगोविंदराजं प्रतिष्ठाप्य तद्दिव्यालयं परितः स्वाचार्यनाम्ना रामानुजपुरं नामावांतरपुरं च निर्माप्य प्रागेव श्रीश्रीनिवासभोगतल्पभूतक्रीडाद्रिरूपशेषपरिसरवर्तिन्यां तत्प्रकोपप्रदूयमानायां श्रीपदपुर्यां मधुकैटभनिरसनार्थं विषानलज्वालाः प्रोद्गमतःश्रीगोविंदराजतल्पभूतस्यानंतस्यापि प्रकोपेन भूयोऽपि महानर्थप्रसंगभयेन श्रीरामानुजमुनिशासनेनैव तदीयान्प्राचीनान्कांश्चित्संनिवेशान्परिवर्त्य तत्तद्दिव्यसूरिदिव्यालयांश्च श्रीवेंकटाचलोपत्यकायां यथापूर्वसंन्निवेशमेव संस्थितांस्तत्रतत्र प्रकल्पितावांतरपुरमध्यस्थितांश्च कृत्वा तां पुरीं शेषकोपप्रशांतिकरगरुडव्यूहसंस्थानसंस्थितां श्रीशेषाचलादूरविप्रकृष्टां च निर्मापयामास ॥ १२ ॥ इत्थं यथोक्तकारिणःश्रीवेंकटाद्रिदिव्यसंस्थानसंबंधिदेशाधिपतेर्नारायणपुरवासिनः स्वांतरंगांतेवासिनो यादवराजस्यानुकूलवृत्तितया स भगवान्रामानुजमुनिः स्वप्रार्थनानुगुण्येन शैवजननिरसनार्थं शंखचक्रादिस्वासाधारणदिव्यायुधधरे श्रीमति वेंकटनाथे स्वप्रतिष्ठापिते श्रीगोविंदराजभगवति चाभिमानातिशयेन च स्वयं विशेषतः श्रीरंगवासरसिकोऽपि श्रीरंगक्षेत्रं प्रति गत्वागत्वा पुनःपुनरागच्छन्कृतासुत्रिचतुरासु श्रीवेंकटाद्रियात्रासु श्रीवेंकटाद्रिसंबंधिदिव्यदेशे तदा तदा तत्तद्देशकालचरित्रविशेषानुगुणान्बहून्विशे

षानूरचयामास ॥ १३ ॥ स च यादवराजो भगवद्भाष्यकारांतेवासिस्वाचार्यशासनानुवर्तनै
कपरायणः स्वाचार्यप्रतिष्ठापिते श्रीगोविंदराजे स्वाचार्यसंज्ञाचिन्हिते तदीये श्रीरामानुजपु
रे च विशेषाभिमानवशेन मंडपगोपुरप्राकारादीन्दिव्यालयांगभूतान्नगरांगभूततत्तद्वीथिक
ल्पनादिविशेषान्भगवतस्तत्तदुत्सवविशेषांश्च निर्वर्तयन्नासीत् ॥ १४ ॥ श्रीहरिवंशे पौष्क
रप्रादुर्भावघट्टे भविष्यपर्वांतर्गतत्र्यधिकद्विशततमाध्याये महार्णवशायिनो भगवतो नारायण
स्य विघ्नस्तमसि संभूतो मधुर्नाम महासुरः॥ तस्यैव तु सहायोऽन्यो जातो रजसि कैटभ इत्या
दिना मधुकैटभदानवसमागमस्य ततःशयानं श्रीमंतं बहुयोजनविस्तृतम् ॥ पद्मनाभं हृषीकेशं
प्रणम्यावोचतामुभाविति मधुकैटभाभिवंद्यतायाः ॥ ततस्तावोचतुस्तत्र ब्रह्माणमसुरोत्तमौ॥ह
तौ युयुत्सया क्रूरौ क्रोधसंरक्तलोचनौ ॥ कस्त्वं पुष्करमध्यस्थः सितोष्णोषश्चतुर्मुख ॥ इति
मधुकैटभयोश्चतुर्मुखं प्रति प्रश्नदर्शनेन नाभिपद्मस्थितचतुराननतायाश्चावगमेन क्षीराब्धि
नाथभूदेविसंवादरूपायां श्रीविष्णुस्मृतौ प्रथमाध्याये ॥ शेषपर्यंकगं तास्मिन्ददर्श मधुसूदनम्
शेषाहिफणरत्नाशु दुर्विभाव्यमुखांबुजम् ॥ शशांकशतसंकाशं सूर्यायुतसमप्रभम् ॥ पीतवास
समक्षोभ्यं सर्वरत्नविभूषितम् ॥ मकुटेनार्कवर्णेन कुंडलाभ्यांविराजितम् ॥ संवाह्यमानांघ्रियु

गं लक्ष्म्या करतलैः शुभैः ॥ शरीरधारिभिःशस्त्रैस्सेव्यमानं समंततः॥ तं दृष्ट्वा पुंडरीकाक्षं ववंदे मधुसूदनमिति क्षीराब्धिनाथाकारवर्णनेन तत्रैवाष्टनवतितमाध्याये इत्येवमुक्त्वा वसुमती जानुभ्यां शिरसा च नमस्कारं कृत्वोवाच ॥ भगवंस्त्वत्समीपे सततमेव चत्वारि महाभूतान्यल्याकाशः शंखरूपी वायुश्चक्ररूपी तेजश्च गदारूप्यंभोरुहरूप्यहमप्यनेनैव रूपेण भगवत्पादमध्यपरिवर्तिनी भवितुमिच्छामीत्येवमुक्तो भगवांस्तथेत्युवाच वसुधापि लब्धकामा तथा चक्र इत्युक्त्वाश्रीवेंकटाचलमाहात्म्यपरब्रह्मांडपुराणप्रथमाध्यायस्थितक्षीराब्धिनाथवर्णनघट्टे संवाह्यमानचरणं श्रिया भूम्या च सादरमित्युक्त्या च श्रीदेवीभूदेवीसंवाह्यमानचरणारविंदत्वादिविशेषणावगमाच्च यथोक्तरूपो गोविंदराजः प्रतिष्ठापितः ॥ १५ ॥ एवं दह्यमानावनंतस्य विषज्वालाभिरेव चेति वचनेन मधुकैटभयोः क्षीराब्धिनाथतल्पभूतानंतविषज्वालादह्यमानताप्रतिपत्त्या नगरस्यापि तदधीनदाहप्रसंगभिया गरुडव्यूहसंस्थानेन तन्निर्माणं कारितम् ॥ १६ ॥ इत्थं कारयित्वा स भगवान्रामानुजमुनिः भो यादवराज श्रीगोविंदराजश्रीवेंकटनाथयोश्च क्षीराब्धिनाथावताररूपता च ब्रह्मांडपुराणप्रथमद्वितोयाध्याययोः स्पष्टा श्रीवेंकटनाथस्य श्रीवैकुंठनाथावतारभूतस्यापि क्षीराब्धिनाथांशमिश्रतया तद

वताररूपत्वमपि शेषावतारभूतस्याद्रेर्भगवद्देहरूपत्वमिव संभवत्येव यथोक्तं ब्रह्मांडपुराणद्वि
तीयाध्याये ॥ विष्णोरपरदेहत्वादाक्रामन्नपदैर्गिरिम् ॥ नारायणांशसंभूतःशेषोऽहिर्गिरिरूप
धृगिति॥अतस्तुल्यतयोभयोरुत्सवादिकं परस्पराविरोधेन निर्वर्तनीयं एवं विप्रकृष्टसन्निकृष्टौ
श्रीवैकुंठनाथक्षीराब्धिनाथावतारभूतौ श्रीवेंकटनाथश्रीगोविंदराजौ तयोरेव लीलां दर्शयंतौ
परस्परैक्यमेवावगमयतः यथाहि सुदूरविप्रकृष्टश्रीवैकुंठनाथः आर्तानां ब्रह्मादीनां निजार्ति
विज्ञापनायोग्यत्वेनातिदुर्लभतयार्तध्वनिं श्रुत्वा तद्रक्षणाय देवादीनां सुखेन समाश्रणीयत्वाय
च स्वयमेव क्षीराब्धिमुपागतः संनिकृष्टःसुलभः सांनिध्ये तथैव श्रीवेंकटनाथोऽपि समुत्तुंगगिरि
शृंगवर्ती विप्रकृष्टो मंदशक्तीनामार्तानां समाश्रयणायोग्यतया दुर्लभः सन्स्वयमेव सुखेन त
त्समाश्रयणीयत्वाय श्रीपदपुर्यां रूपांतरेण संनिकृष्टः सर्वसुलभः सांनिध्ये किंबहुना श्रीवैकुंठ
नाथक्षीराब्धिनाथयोरैक्ये तदवतारभूतयोः श्रीवेंकटनाथश्रीगोविंदराजयोरपि तद्वदैक्यं सु
गमं किंच इत्थं कलौ किंचित्कालानंतरं केनचित्कारणेन क्षीराब्धिनाथावतारभूतश्चित्रकूटदि
व्यक्षेत्राधिनाथः श्रीगोविंदराजः श्रीवेंकटाद्रेरुपत्यकायां श्रीपदपुर्यां समागमिष्यति तदानीं
च श्रीवैकुंठनाथश्रीक्षीराब्धिनाथावतारभूतौ श्रीवेंकटनाथश्रीश्रीगोविंदराजौ श्रीवेंकटगिरेर

धित्यकोपत्यकावर्तिनौ मंदशक्तीनामार्तानां दुर्लभसुलभौ च संतौ ब्रह्मादिदेवानां विप्रकर्षसं निकर्षाभ्यां दुर्लभसुलभयोरूर्ध्वाधरस्थानावस्थितयोः स्वमूलभूतयोः श्रीवैकुंठनाथक्षीराब्धि नाथयोरेव लीलां प्रकाशयंतौ ताविवैकवस्तुभावापन्नौ च वर्तिष्येते इति भाविवृत्तांतं विज्ञायैव श्रीवेदव्यासभगवदंतेवासी त्रैकालिकसर्वधर्मवृत्तांतविज्ञाता श्रीसूतमहामुनिः श्रीवेंकटाचल माहात्म्यपरश्रीवाराहपुराणांतर्गतप्रथमभागस्थैकषष्ठितमांकचिन्हितैकोनात्रिंशाध्याये श्रीवें कटेशाष्टोत्तरशतनामावल्यां गोविंदाय नमो नित्यं श्रीनिवासाय ते नम इति पठन् श्रीश्रीनिवा सगोविंदराजयोरेकवस्तुभावापन्नतामेव ज्ञापयामास तस्मात्क्षीराब्धिरेव श्रिय आकरस्थान तया श्रीपदसंज्ञाचिन्हितपुरीरूपमापन्नं वर्तते श्रीवैकुंठ एव च किंचिद्वर्णव्यत्यासेन श्रीवेंकट संज्ञाचिन्हिताचलरूपमापन्नो वर्तते तत्र वर्तमानौ श्रीगोविंदराजश्रीनिवासौ क्षीराब्धिनाथ श्रीवैकुंठनाथावेव तौ चैकवस्तुभावापन्नावेवेति सुदृढमध्यवस्यन्परिपूर्णप्रतिपत्तियुक्तस्तयो: समानमेवोत्सवादिकं परस्पराविरोधेन सम्यङ्गनिर्वर्तयेति यादवराजं न्ययुंक्त ॥ १७ ॥

ततो यादवराजेन यथायतींद्राज्ञं श्रीगोविंदराजस्याराधनमहोत्सवादिषु निर्वर्तमानेषु श्रीगो विंदराजेऽपि तत्तदर्थिनमपेक्षितदृष्टादृष्टसकलफलप्रदायिनि प्रसिद्धे विराजमाने सति संता

नार्थिनि काशीराजे श्रीवेंकटनाथं सेवितुं सकुटुंबे समायाते भगवाञ्छ्रीवेंकटनाथो देहि मे ददा
मि त इति श्रुतिप्रसिद्धां प्रायशो देवतांतरमुखेनैव निर्वर्त्यमानां लीलां स्वकीयामेव स्वसंकल्पे
नैव देवतांतरगतां लोकानां ज्ञापयितुकामः स्वयमपि परिगृहीततादृशलीलः काशीराजमहि
षीं स्वप्ने तुभ्यमहं संतानं दास्यामि तव नासामणिं मे देहीत्यप्यर्थयंस्तया च राजमहिष्या भोः
स्वामिन्भर्तृपरतंत्राहमस्मि यदि भर्तानुमन्यते तर्हि दास्यामीति प्रत्युक्तः एवं तर्ह्यहमप्यस्म
दग्रजस्य श्रीगोविंदराजभगवतः परतंत्रोऽस्मि स यदि तुभ्यं संतानदानायानुमन्यते तदै
व तुभ्यमहं संतानं दातुं शक्नुयां नान्यथेति प्रतिवदन् प्राग्रामानुजमुनिनिर्णीतां श्रीगोविंद
राजस्य स्वस्य चैकवस्तुमूलतानिबंधनामेकवस्त्वंतरभूतत्वलक्षणामेकवस्तुतामेव प्रकटीच
कार ॥ १८ ॥ एतं वृतांतमाकर्ण्य स भगवान्रामानुजमुनिर्यथैकास्मिन्दिव्यालये पंचानां बेरा
णामेकमूलतयैक्यं तथैव श्रीगोविंराजभगवता सह स्वस्यैक्यमस्मदभिमतमंगीकृतं भगवता
श्रीनिवासेनात इतः प्रभृति श्रीवेंकटनाथश्रीगोविंदराजयोराराधनसमये श्रुतिस्मृतीहासपुरा
णाद्यनुसंधाने श्रीवेंकटाचलमाहात्म्यभागश्रीचित्रकूटमाहात्म्यभागावुभावप्युभयत्रानुसंधे
यौ श्रीवेंकटाद्रिश्रीपदपुरीरूपोभयस्थलवासिभिः श्रीवैष्णवैरिदं स्थलद्वयमेकदिव्यदेशं संभा

व्य निजगृहेषु विवाहोत्सवादिकालेषु स्वस्वमहिषीसहितयोः श्रीवेंकटनाथश्रीगोविंदराज
योरुभयोरपि संभावना कार्या गद्यबिरुदाद्यनुसंधानकालेपि श्रीवेंकटाचलनिवासचित्रकूटवि
हारेत्युभयपदघटितमेवोभयोर्गद्यबिरुदानुसंधानं च कार्यमिति व्यवस्थामप्यारचयामास १९
एवं श्रीरामानुजमुनिः श्रीनिवासभगवतोऽनवधिकाविच्छिन्नैश्वर्याभिवृद्धये तदीयवक्षोनिल
यकंठिकायां यथा व्यूहलक्ष्मीः प्रतिष्ठापिता तथा श्रीगोविंदराजस्याप्यविच्छिन्नैश्वर्याभिवृद्ध
ये काचन देवी प्रतिष्ठापनीयेति श्रीभट्टनाथदिव्यसूरिकन्यकाभावमापन्नामयोनिजां श्रीतुल
सीकाननसंभवांभूदेव्यंशावतीर्णां श्रीगोदादेवीमविकलसकलसल्लक्षणां श्रीगोविंदराजाभि
मुखप्रचुरच्छायसुभगसौगंधिकालंकृतवामहस्तां तदीयदिव्यैश्वर्याभिवृद्धिकारिव्यूहलक्ष्मीसं
बंधियंत्रमंत्रोद्धारादिभिर्यथाविधि लिखितैरलंकृते दिव्यसिंहासने स्थितां भगवतो गोविंदरा
जस्य दक्षिणे पार्श्वे पृथग्मंदिरे पृथक्स्थायिप्रधानमहिषीन्यायेन प्रतिष्ठापयामास ॥२०॥ त
तश्च तन्नियमेन यादवराजःश्रीगोविंदराजस्य पुराणसिद्धंमिथुनमासमहोत्सवंश्रीगोदादेव्याः
कर्कटकमासमहोत्सवं धनुर्मासमहोत्सवं यथाविधि च ससंभ्रमं निर्वर्तयामास ॥ २१ ॥ तदा
नीं स यादवराजः श्रीरामानुजमुनिनियमनेन श्रीगोदादेवीसमेतश्रीगोविंदराजस्य सततम

हाभागवतमंगलाशासनेन निर्विघ्नैश्वर्यसमृद्धिं संपादयितुकामः श्रीगोविंदराजाधिष्ठानभूते
श्रीरामानुजपुरे समंततो बलिहरणवीथिषु बहूनि गृहाणि निर्माय श्रीशैलपूर्णश्रीमदनंतार्य
प्रभृतीनां महाभागवतानामन्येषां च बहूनां श्रीवैष्णवानां दत्वा तांस्तत्र निवासयामास ॥ २२
एवं नगरस्य तु वायव्ये दिक्प्रदेशे समस्थले॥पण्यवीथिं प्रकुर्वीत प्रजानामभिवृद्धय इति शा
स्त्रानुरोधेन श्रीरामानुजपुरवायव्यदिग्भागे तन्नगरस्थजनानुकूलतया पण्यवीथिं धान्यागारं
तु पूर्वस्यां दिशि देवस्य कारयेदिति शास्त्रानुरोधेन भगवन्मंदिरस्य पुरस्ताद्देवस्य धान्यागा
रं च निर्मापयामास ॥ २३ ॥ इत्यनंतार्यगुंफितायामितिहासमालायां चतुर्थः स्तबकः ॥ ४॥
अथ श्रीवेंकटाचले भगवद्दिव्यालये वर्तमानपुष्पवापिकास्वर्णकूपादिवृत्तांत उच्यते ॥ १ ॥
॥ पुरा ॥ ॥ नित्यं बिलेन चागत्य देवं नत्वा नृपोत्तमः॥ राज्यं चकार धर्मेण भुंजानो भोगमुत्तम
मिति भूगोलोपाख्यानशब्दितवराहपुराणद्वितीयभागांतर्गतदशमाध्यायोक्तरीत्या तोंडमांश्च
क्रवर्ती कलियुगादौ श्रीवेंकटनाथदिव्यचरणारविंदयुगलपरिपूर्णभक्तिसंपन्नस्तदनुग्रहेण रा
ज्यं धर्मेण परिपालयन्समस्तभोगांश्च भुंजानो भगवदुपदर्शितश्रीनृसिंहबिलद्वारेण गत्वा
श्रीनिवासमनुदिनमभिवंदमान आसीत् ॥ १ ॥ तदानीं तस्मिन्राजनि भगवत्सान्निधौ स्थिते

॥ स्थिते कदाचित्क्षितिपे श्रीनिवासस्य सन्निधौ ॥ क्षत्रवच्च बलोद्रिक्ता रुरुधुस्तस्य वैपुरीमि
ति ब्राह्मपुराणसप्तमाध्यायोक्तरीत्या सामंतराज्यसंघेषु तोंडमान्नृपं जेतुं तदीयं नगरं वेष्टय
त्सु स च राजा तानभिद्रुत्य स्वदेशं धावतस्ताननुधाव्य प्रबलं युद्धं च कृत्वा क्षीणबलो मिलितैः
सर्वैरपि तै राजसंघैः पराजयं प्रापितः कांदिशीकः स्वदेशमागत्य श्रीनृसिंहबिलं प्राप्य श्री
नृसिंहमभिवंद्य तद्बिलमार्गेण श्रीनिवासं सहमहिषीकं विहाररसिकं संतमसमय उपससर्प २
ततश्चाकालेंतःपुरमागतं परपुरुषमभिवीक्ष्य लज्जितयोर्भगवता सहविहरंत्योः श्रीभूदेव्योः स
हसा पलायनपरायणयोरेका श्रीदेवीनिवासोरस्समारूढा श्रीवैजयंतीमालायामंतर्दधे ॥३॥ अ
परा तु भूदेवी समीपस्थायां पूर्वकाले रंगदासेन नंदनवनार्थं खातायां वापिकायां निपत्यांतर्हि
ताबभूवेति कथां वृद्धजनैः कथितामापंडितपामरं सर्वतः प्रसिद्धामाकर्ण्य श्रीरामानुजमुनिः पूर्व
कल्पेऽप्यकालायाततोंडमान्नृपसमागमलज्जितश्रीनिवासमहिष्यपसर्पणमिदं पुराणे प्रतिप
द्यते ॥१॥ परं तु तत्र गंगाप्रस्थायिदाक्षिणात्यवीरशर्मविप्रवृत्तांतप्रकरण ईदृशमपसरणमव
गम्यते ॥ २ ॥ अद्य तु तोंडमान्नृपशत्रुपरिभववृत्तांतप्रकरणे तद्विधीयते ॥ ३ ॥ यथोक्तं वरा
हपुराणद्वितीयभागे दशमाध्याये वीरशर्मविप्रवृत्तांते ॥ अनुक्त्वा ब्रह्मणे तस्मै प्रविश्य बिलमु

तमम् ॥ श्रीनृसिंहं नमस्कृत्य पुनः प्राप्य बिलोत्तमम् ॥ श्रीनिवासं ययौ द्रष्टुं श्रीभूमिसहितं परम् ॥ तं दृष्ट्वा सहसायांतं जुगूहाते धरारमे ॥ प्रणमंतमवोचत्तं किमकाले नृपागतः ॥ नृपोऽवदत्प्रणम्येशं भीतोऽथ ब्राह्मणीं मृतामिति ॥ तथा चेदमीषत्कथावैषम्यं कल्पभेदादिनिबंधनं भवितुमर्हति ॥ ४ ॥ किंच भूतीर्थत्वेन पुराणप्रतिपन्नायामस्यां वापिकायां भूदेव्याः प्रवेशोऽपि संगतः ॥ ५ ॥ अतः क्रीडाविघ्नभयात्पलायिताया अस्या एतां वापिकां प्रविष्टाया अत्रैव निर्विघ्नक्रीडासिद्धये भगवता सहास्या अत्र प्रतिष्ठापनं न्याय्यं भवतीत्यनुसंधाय तदितिहासपरिपालनाय तस्यां रंगदासवापिकायां भूदेवीं तादृशतीर्थादिपतिभावापन्नं भगवंतं चार्चारूपेणाविर्भाव्य प्रतिष्ठाप्यांतर्निवेश्य प्रतिदिनं तादृशवाप्यां तयोराराधनं कार्यम् ॥ १ ॥ श्रीनिवासभगवतस्तुलसीकुसुममाल्यादिकमपि भूदेव्यर्थं तत्र निक्षेप्तव्यमिति च व्यवस्थां कृत्वा तथैव निर्वर्तयामास ॥ २ ॥ सा च वापी श्रीनिवासपुष्पमाल्यनिक्षेपणेन पुष्पवापिकासंज्ञयाद्य विख्याताऽभवत् ॥ ३ ॥ एवं भगवद्यामनमुनिः कदाचिच्छ्रीवेंकटगिरियात्रायां श्रीवेंकटनाथमंगलाशासनं कुर्वाणः कस्मिंश्चिद्दिवसे प्रातः श्रीमतः श्रीनिवासभगवतः स्नपनार्थं श्रीपापविनाशनदिव्यतीर्थात्पवित्रतममत्यारोग्यनिदानं हीरकमणिप्रभापटलसुस्वच्छं तीर्थं श्रीशैल

पूर्णे वर्षोपद्रववशेनानेतुमशक्नुवति तीर्थांतराणि भगवद्दिव्यमंगलविग्रहारोग्यावहानि न भवंतीति पर्यालोच्य भगवतीं श्रियं देवीं शरणं प्रपद्य भगवति श्रीदेवि भवत्तीर्थमिदं भगवद्दिव्यमंगलविग्रहारोग्यकरं भवतु ॥ १ ॥ इतः परं श्रीपापविनाशनतीर्थमिवेदमपि भगवदभिषेकयोग्यं भवत्विति प्रार्थयञ्छ्रीतीर्थतया पुराणप्रतिपन्ने पूर्वं रंगदासखाते पाकशालासमीपस्थे स्वर्णकूपसंशब्दिते दिव्यकूपे स्वयं तीर्थमुद्धृत्य भगवदभिषेकं निर्वर्तयन्नितःप्रभृति सुंदरस्यास्मत्स्वामिनोऽस्य भगवतः श्रीनिवासस्यायमसाधारणः कूपः सन् सुंदरस्वामिकूप इति तत्संज्ञया व्यवहर्तव्यः ॥ १ ॥ अनेनैव च भगवतः सर्वं कार्यं निर्वर्तनीयम् ॥ २ ॥ श्रीपापविनाशनादितीर्थानागमनेपि च नाराधनाभिषेकादिविलंबः कार्य इति व्यवस्थापयामासेति कथां वृद्धैरभिवर्णितामाकर्ण्य निजपरमाचार्यशासनं परमादरेण शिरसा प्रतिगृह्णञ्छ्रीरामानुजमुनिः स्वीयानपि सर्वाञ्छ्रीयामुनमुनिशासनं यथावन्निर्वर्तनीयमिति नियम्य श्रीपापविनाशनतीर्थस्य तत्प्रतिनिधितया भगवतैव नियमितस्य गगनगंगातीर्थस्य परमाचार्यनियमितस्य श्रीमत्सुंदरस्वामिकूपस्य च त्रयाणामन्यतमस्यैव तीर्थेन भगवतः श्रीनिवासस्य सर्वं कार्यं निर्वर्तयामास ॥ ४ ॥ भगवन्मंदिरेऽन्नपाकशालापार्श्वस्थः पुरा श्रीदेव्या पाकार्थं निर्मितः कूपः

संप्रति सुंदरस्वामिसंज्ञया व्यवह्रियमाणः सुवर्णकूपापराभिधानएकश्चंपकप्रदक्षिणे ईशान दिग्भागे पुष्पमंडपसमीपे भक्ष्यपाकशालापार्श्ववर्ती पुरापाकार्थं भूदेव्या निर्मितः संप्रति पुष्पवापिकाख्योऽपरः कूपश्चेत्येतावुभौ कूपौ श्रीतीर्थभूतीर्थरूपौ प्राक्कदाचिदनभिव्यक्तौ पश्चाद्रंगदासेन पुष्पवनपालनार्थकूपखननमुखेनोद्भावितौ पश्चात्तोंडमान्नृपरूपेणाविर्भूतेन तेनैव संस्यङ्निबद्धांगौ विराजेते ॥५॥ उक्तं हि वाराहपुराणद्वितीयभागे नवमाध्याये॥एवं दृष्ट्वा श्रीनिवासं विस्मितो रंगदासकः॥ अस्य देवस्य चारामं करिष्यामीत्यचिंतयदित्यारभ्य मल्लिकाकरवीराब्जकुंदमंदारमालती ॥ तुलसीचंपकानां तु वनान्येव चकार ह॥खनित्वा तत्र कूपौ द्वौ वर्धयंस्तज्जलैर्वनं॥आरामपुष्पाण्यादाय स्वयं दानान्यथाकरोदित्यंतेन स्वामिपुष्करिणीतीरेऽद्य विद्यमानभगवद्दिव्यालयस्थाने पुष्पारामकरणपूर्वकं रंगदासेन कूपद्वयं कृतमिति॥६॥भविष्योत्तरपुराणेऽपि त्रयोदशाध्याये॥ ताम्रपत्रैस्तु संबद्धं स्वर्णालंकारमंडितं॥श्रीतीर्थमन्नशालाग्रे भूतीर्थं भूमिपालक ॥ त्वया विनिर्मितं पूर्वं तोंडमानमहीपते ॥तदद्य कुरु शोभाढ्यं शिलाबंधनपूर्वकमितितदा त्वया कृतावेतौ कूपावारामकरणात् ॥ इति ते कथिते पूर्वं जन्मकर्मसमुद्भवम् ॥ गोविंदवचनं श्रुत्वा तोंडमान्राजसत्तमः॥ कूपौ संशोधयामास स्वकृतौ पूर्वजन्मनीति चोक्तम्॥७॥

ब्रह्मपुराणे च सप्तमाध्याये॥वल्मीकस्यांतरे विष्णोः प्रतिमावर्तते शुभा॥ जानुमात्रे निमग्ना हि तिंत्रिणीवृक्षमूलतः॥धनुर्द्वयांतरे पुण्यं भूतीर्थं वर्तते शुभम् ॥ पाकार्थं देवदेवस्य भूम्या वै निर्मितं पुरा ॥ तत्रास्ते गौतमी धेनुः सिंचंती पयसा विभुम् ॥ चिंचावृक्षस्य वायव्ये भूतीर्थं वासमीयुषीति॥भूस्वामिपुष्करिण्योश्च मध्ये क्रीडास्पदं हरेः॥ पुष्पोद्यानं चकारासौ शूद्रो भागवतोत्तम इति चोक्तम् ॥ ८ ॥ अथास्वप्नचिंचाचंपकतरुवृत्तांत उच्यते ॥ ९ ॥ वाराहपुराणद्वितीयभागे नवमाध्याये॥ वनमध्ये तरोर्मूले स्वामिपुष्करिणीतटे॥तिष्ठंतं पुंडरीकाक्षं श्रीभूमिसहितं हरिं ॥ आकाशस्थं संददर्श पीतनीलाकृतिं शुभमिति वचनेन ॥ स्नात्वा तत्त्वविधानेन राज्ञा सह निषादपः ॥ दर्शयामास देवेशं राज्ञस्तस्य महात्मनः ॥ स्वामिपुष्करिणीतीरे तिंत्रिणीवृक्षमूलगमिति वचनेन ब्राह्मपुराणसप्तमाध्याये॥पुष्पोद्यानकरःशूद्रः पूजकश्च द्विजोत्तमः॥प्रविष्टौ वेंकटं शैलं उभावन्योन्यसंगतौ॥स्वामिपुष्करिणीं पुण्यां जग्मतुश्च शनैःशनैः॥ तत्र स्नात्वा विधानेन हरिं व्यचिनुतां तदा ॥ विचिन्वतोस्तयोस्तत्र स्वामिपुष्करिणीतटे ॥ चिञ्चावृक्षस्य मूले तु प्रादुरासीज्जनार्दनः ॥ तिंत्रिणीवृक्षमूलस्थ वल्मीकस्थं हरिं परं॥उद्धृत्य पश्चिमे भागे स्थापयामासतुश्च ताविति वचनेन भविष्योत्तरपुराणे॥इत्थं विचार्यमाणे तु स्वामिपुष्करिणीतटे दक्षिणे विम

लं दिव्यं वल्मीकं दृष्टवान्मुदा॥तिंत्रिणीवृक्षमूलस्थं भगवाञ्जगदीश्वरः॥मत्वेदं परमं स्थानं तत्र लीनोऽभवद्धरिरिति वचनेन चोक्तरीत्या तिंत्रिणीवृक्षमूले श्रीनिवासभगवति प्रादुर्भूय विराजमाने रंगदासो नाम कश्चिद्भगवद्भक्तो दक्षिणदेशात्पूजकेन गोपीनाथनाम्ना मार्गसंगतेन वैखानसद्विजोत्तमेन श्रावितस्वीयस्वप्नवृत्तांतस्तेन स्वामिपुष्करिणीदक्षिणतीरेसह श्रीवेंकटाद्रिमागम्य तिंत्रिणीवृक्षमूलस्थं भगवंतं दृष्ट्वास्य भगवतो मंदिरं किंचननिबद्धव्यमुद्यानं च कर्तव्यमिति चिंतयंस्तत्र भगवत्पार्श्ववर्तिनं परितो व्याप्तदूरदीर्घविपुलमहाशाखं चिंचावृक्षं पल्लवितकतिपयशाखं कुसुमितकतिपयशाखं शलाटुमयकतिपयशाखं परिपक्वफलबहुलकतिपयशाखं कदाचिदपि क्वचिदपि शाखायां लोकोपयोगिकार्यारंभविश्रांतिलक्षणनिद्राविधुरं महाछत्रवद्भगवंतं समंतत आवृण्वतं च विलोक्य विस्मितहृदयो नूनमयमस्वप्नाश्चिंचातरुः कस्यचिदस्वप्नस्य अंशभूत एव भवितुमर्हति तत्रापि सततविततनिजफणामंडलमयविपुलधवलातपत्रमंडलेन भगवतः सततशीतातपादिनिवारणशीलस्तदंतरंगपरिवारभूतः श्रीमाननंत एवायमस्वप्नचिंतातरुर्भवितुमर्हतीत्यनुसंधाय ततश्चिंचावृक्षसमीपे नैर्ऋत्यां दिशि तथाविधलक्षणमेव चंपकतरुं च कंचिद्विलोकयंतमपि देवांशसंभूतमेव अनुसंधायाऽत्र समंतत

स्तरुकर्तनमंतरेण च कथं मंदिरमुद्यानं वा निर्मातुं शक्यमिति चिंतयंस्ततो भगवता मदास्थानभूतस्तिंत्रिणीवृक्षो लक्ष्म्या स्थानभूतश्चायं चंपकवृक्षः अतस्तावुभौ विहाय अन्यान्वृक्षादींश्छित्वा मंदिरमुद्यानं च कर्तव्यमिति नियमितस्तथैव चकार ॥ १० ॥ यथोक्तं वराहपुराणद्वितीयभागे नवमाध्याये रंगदासप्रकरणे॥आस्थानचिंचां देवस्य रमायाश्चंपकंतरुम्॥ देवाज्ञयोवर्जयित्वा तावुभौ देवसेवितौ ॥ देवस्य परितो भूमौ शिलाकुड्यं तदाकरोत्॥ वासस्थानं चकाशादौ दारुभिः सुमनोहरैः॥ तत्कुड्यस्यैव परितः पुष्पारामांश्चकार हेति ॥ ११ ॥ तत्रैव दशमाध्याये तोंडमांश्चक्रवर्तिप्रकरणेऽप्युक्तं ॥ यथोक्तं देवदेवेन क्षीरप्रक्षालनादिकं ॥ कृत्वा प्राकारनिर्माणं कर्तुमुद्योगमाययौ ॥ तदानीं देवदेवेन स्वयमाज्ञापितो नृपः ॥ तिंत्रिणीं चंपकं चोभौ पालयैतौ नगोत्तमौ॥ मम चास्थानिकी चिंचा लक्ष्म्याः स्थानं च चंपकः ॥ नमस्कार्यौ नृपैस्तौ हि ऋषिदेवनरैःसदा ॥ संस्थाप्यैतोतोनृपश्रेष्ठ छेदयान्यान्नगोत्तमानिति॥१२॥ अत्र तिंत्रिणीचंपकवृक्षयोर्भगवतो लक्ष्म्याश्चास्थानभूतयोस्तावुभौ देवसेविताविति नमस्कार्यौनृपैस्तौ हि ऋषिनरैस्तदेति च सर्वदा देवादिवंद्यत्वाभिधानाद्भगवता स्वयमेवाछेद्यत्वाभिधानाच्चैतयोस्तदासति भगवत्कैंकर्यविरोधे भागवतमनोरथाराधेन ततस्तत्कार्यानुकूलतयापसरणशील

तया सूर्यगत्यधीनगतिविहीनसततैकरूपनिजच्छायतया च लोकप्रसिद्धतयोरस्वप्नचिंचाचंपकयोर्ध्वजस्तंभादूरविप्रकृष्टोत्तरदक्षिणभागयोर्यथाविधिप्रतिष्ठापितयोरवश्यं प्रतिदिनमाराधनं कार्यमिति व्यवस्थां कृत्वा श्रीरामानुजमुनिर्नित्यमाराधनं निर्वर्तयामास ॥ १३ ॥ अथ कनकमयनागाभरणसंबंधिवृत्तांतविशेष उच्यते ॥ १४ ॥ पुरा खलु वीरनरसिंहदेवो नाम कश्चिद्गजपतिस्तीर्थयात्रापरः सेतुदर्शनं कर्तुकामः प्रस्थितो मध्येमार्गे श्रीवेंकटाचलवैभवं श्रुत्वा श्रीवेंकटाचलमारुह्य श्रीस्वामिपुष्करिण्यांस्नात्वा श्रीज्ञानवराहं भगवंतं प्रणम्य सेवाक्रमेण श्रीवेंकटनृसिंहं श्रीवेंकटनाथं चाभिवंद्य क्षेत्रोपवासादिनियमानप्यनुतिष्ठन्कलौ वेंकटनायकप्रभावप्रकर्षं च श्रुत्वा श्रीवेंकटनाथदिव्यचरणारविंदयोरतिमात्रभक्तिपरवशः सञ्छ्रीवेंकटनाथदिव्यालये यत्किंचित्कैंकर्यं कर्तव्यमिति मनोरथं कुर्वाणः किंनुवा कैंकर्यमत्र कर्तुमुचितमिति तत्रत्यविद्वज्जनान्पप्रच्छ॥१५॥ततश्च विद्वज्जनाः॥भूषणानां किरीटश्च वाहनानां परो रथः॥गोपुराणां विमानश्च रत्नानां वज्रमुत्तमं ॥ वर्णानां ब्राह्मणः श्रेष्ठ आश्रमाणां तथा यतिरित्यागमशास्त्रोक्तेषु यत्ते मनसि रोचते तत्कुरुष्वेति गजपतिमवादिषुः ॥ १६ ॥ ततश्च स गजपतिरस्मिन्दिव्यक्षेत्रे श्रीवेंकटनाथवैभवानुगुणं गोपुरं न विद्यते अतोऽत्र श्रीवेंकटनाथदिव्यवैभवानुगु

णं महोन्नतं गोपुरं निबध्नीयामितिचिंतयंस्तदर्थं बहुद्रव्यं बहून्मनुजांश्च दत्वा गोपुरारंभं च कृत्वा पुनरागच्छामि कार्यं निर्विघ्नं निर्वर्त्यतामिति व्यवस्थाप्य श्रीकांचिश्रीरंगादिदिव्य प्रदेशेषु भगवंतमभिवंदमानः सेतुमपि दृष्ट्वा प्रतिनिवृत्तः पुनः श्रीवेंकटाचलमारुह्य अर्धनिबद्धं गोपुरं च दृष्ट्वा संतुष्टः सन्दानादिधर्मैस्तत्रत्याञ्जनांश्च बहुधा संतोषयन्कंचित्कालं तत्र तस्थौ ॥ १७ ॥ तदानीं तस्य गजपतेः कदाचिद्रात्र्यां स्वप्ने कश्चन सर्पराजः संमुखमागत्य भो गजपते अयं श्रीशैलो मामकीनं शरीरं अत्र महोन्नतस्य कस्यचिद्गोपुरस्य बंधनं मम महते भाराय कल्पते ततश्च महती पीडा मे संजाता सैषा भवत्कल्पिता पीडा मम स्वामिसन्निधिं गत्वैव मया यापयितुं शक्या नान्यथेत्यभिधाय भगवद्दिव्यालयं गत्वा भगवतो वैकुंठहस्तं वेष्टयामास ॥ १८ ॥ तत्तादृशं स्वप्नं दृष्ट्वा भीतभीतः स वीरनरसिंहदेवो नाम गजपतिर्विद्वज्जनानाहूय स्वप्नवृत्तांतं कृत्स्नमपि विज्ञाप्य तस्यैतस्य स्वप्नस्य किं तात्पर्यमिति तान्पप्रच्छ ॥ १९ ॥ ततश्च ते विद्वजनाभोराजन्नयं श्रीशैलः श्रीशेषावतारभूत इति श्रीवेंकटाचलमाहात्म्यपरेषु पुराणभागेषु बहुधोद्घुष्य एव भवदीयस्वप्नपर्यालोचने च भवतात्र गोपुरबंधनमादिशेषस्य भारविशेषहेतुत्वेन पीडाकरतया तदनभिमतमित्येव प्रतीयते ततश्च गुरुतरभारायमाणस्य महोन्नत

स्य गोपुरस्यात्र निबंधनं न कर्तव्यमित्येव स्वप्नतात्पर्यमिति गजपतिं प्रत्यब्रुवन् ॥ २० ॥ ततः स राजापि भृशभीतो गोपुरबंधनं तावतैव परिसमाप्य श्रीवेंकटनाथस्य गोपुरनिबंधनकैंकर्यमेतावदेवाभिप्रेतमित्यनुसंदधानः प्रसक्तातिशेषापचारपरिहाराय तदाकारमेकं दिव्याभरणं निर्माप्य भगवत्संनिधौ तदिदमाभरणं भगवतः समर्पणीयमित्यभ्यर्थयन्निदधौ ॥ २१ ॥ तदनु नागाकारं तद्दिव्याभरणं राज्ञा समर्पितं दृष्ट्वा भगवत्परिजना इदं कुत्र वा भगवतो धारणीयं किंच नागाकारमिदमाभरणं देवतांतरलक्षणभूतं भगवतो धारयितुमुचितं वा नवेति संदिहानः ततो भगवताकं चित्पुरुषमाविष्टेन भोःपरिजन पुरा किल शेषमारुतसंवादे शेषाचलस्येहानयनार्थं मया मारुते किंचित्पक्षपात आश्रिते खिन्नमनाः शेषो गतमदोऽस्मिन्स्वावतारभूते शैले दिव्यं वर्षसहस्रं महाघोरं तपश्चरित्वा मामिह स्वयमेवावाहयंस्तल्परूपेणेव शैलरूपेणापि मामुद्वहन्मदीयनिरतिशयप्रीतिभाजनीभूतो वर्ततेतमेनं पुरा मयैव किंचित्खेदं नीतं पिता खिन्नं पुत्रमिव पाणिभ्यामेव धारयन्नुपलालयामि सर्वदेशसर्वकालसर्वावस्थोचिताशेषशेषवृत्त्यैकनिरतो विशेषतश्चास्मिन्क्षेत्रे सर्वात्मना परिचरणपरायणो मदंतरंगकिंकरो मम निरतिशयप्रियो ह्यसौ शेषः अतस्तदाकारमिदं नागाभरणं पाणावेव धार्यतामिति नियमितो

भगवतः श्रीवैकुंठहस्ते तद्दिव्याभरणं धारयामास ॥ २२ ॥ शेषमारुतसंवादे भगवतः शेषाच लानयनकौतुकिनो मारुतपक्षपातित्वं ततः किंचित्खेदमापन्नस्य शेषस्य भगवंतमुद्दिश्य घोर तपश्चर्याकरत्वं शेषाचले भगवत आविर्भावहेतुत्वं भगवन्निरतिशयप्रीतिभाजनत्वं च पुराणसि द्धमेवावगम्यते ॥ २३ ॥ यथोक्तं ब्राह्मपुराणे शेषमारुतसंवादे प्रथमाध्याये ॥ एवंवृत्ते विवादे तु तत्रागाद्धरिरीश्वरः ॥ किमेतदिति तौ पृष्ट्वा शेषेणोक्तोऽतिविस्तरात् ॥प्राहोद्वृत्तं तदा शेषं भा विकार्थं स चिंतयन् ॥ ॥ श्रीभगवानुवाच ॥ ॥ लोकांतरात्मा बलदेवतायाः प्राणो ममापि ह्य धिको मतोऽयं ॥त्वं लोकभर्तेति महान्मदस्ते तवापि वै कूर्मवरोहिवोढेति भगवतो वायोः पक्षपा तित्वमभिहितं ॥२४॥ तत्रैव द्वितीयाध्याये ॥ शेषो गतमदः पश्चात्तस्मिन्नेव नगोत्तमे ॥ वायव्ये स्वामिसरसो नागतीर्थे मनोरमे ॥ नानासानुसमाकीर्णे नानापादपमंडिते॥ उत्तरे शिखरे पुण्ये सांनिध्यार्थं जगत्पतेः॥ तपस्तेपे महाघोरं दिव्यं वर्षसहस्रकम् ॥ तपसा तोषितो देवः प्रत्यक्षः समजायत॥वरं वरय भद्रेति तेनोक्तः शेष आहतम् ॥ ॥ शेष उ०॥ ॥ यदि प्रसन्नो भगवन्निदं मे देहि भो वरम् ॥ यथा शेषे मदंगे त्वं वैकुंठे भुवनोत्तमे॥ शैलाकारे च मद्देहे नित्यमत्र वस प्रभो इति शेषेण चोक्तः सन्भगवान्प्रत्युवाच ह ॥ पुरा विचारितं स्थानं भूमौ क्रीडास्पदं शुभमित्या

दिना ॥एतस्मिन्नंतरे वायोस्तव संवादहेतुकः॥ गिरिरत्रागतः पुण्यस्त्वयापि तपसार्थितः ॥ इ
ष्टं मे प्रार्थितं पूर्वं तथास्त्विति वरं ददौ ॥ तेन विष्णुः समायातु हित्वा वैकुंठमुत्तमम् ॥ स्वामिपु
ष्करिणीतीरे रमया सह मोदित इत्यंतेन वायुपक्षपातमूलखेदभाक्त्वतदधीनघोरतपश्चर्याक
रत्वतदधीनभगवदाविर्भावहेतुत्वानि शेषस्याभिहितानि ॥ २५ ॥ यथोक्तरीत्या शेषमारुत
संवादवृत्तांतो भविष्योत्तरपुराणप्रथमाध्यायेऽपि द्रष्टव्यः ॥ २६ ॥ ब्रह्मांडपुराणद्वितीयाध्या
ये च ॥ अथाह भगवाञ्छेषमाहूय पुरतः स्थितम् ॥ मेघगंभीरया वाचा हर्षोत्फुल्लविलोचनः ॥
॥ श्रीभगवानुवाच ॥ ॥ अनंतमत्प्रियो लोके न त्वदन्योऽस्ति कश्चन ॥ तस्मान्मम प्रियं किं
चित्कर्तव्यं भवतानघ ॥ श्रुतं हि भवता सर्वं नारदोदीरितं वचः ॥ क्रीडासमुचिते देशे वस्तव्य
मिति मे मतिः ॥ तत्र भूत्वा गिरिवरो भवान्वसतु भूतये ॥ त्वत्फणामंडलभुवि स्थातव्यं रमया
सहेत्यादिना शेषस्य भगवन्निरतिशयप्रीतिभाजनत्वतदधीनगिरिरूपावतीर्णत्वादिकमुक्तम् ॥
॥ २७ ॥ एवं वीरनरसिंहदेवनामकगजपतिमहाराजकालप्रभृतिश्रीरामानुजमुनिकालपर्यंतं
यथोक्तहेतुना ध्रियमाणैकहस्तनागाभरणमेव विराजमानं भगवंतं श्रीनिवासं वंदमानः श्री
रामानुजमुनिर्नागाभरणधारणहेतुभूतां वीरनरसिंहदेवनामकगजपतिमहाराजकथां च वृ

द्वजनकथितां श्रुत्वा श्रीशेषाचलेशस्य भगवतः श्रीनिवासस्य विशेषतः शेषप्रियत्वस्य पुराण
प्रतिपन्नतया तदधीनार्वाचीनचरित्राणामपि तदुत्तंभकतया च शेषाकारदिव्याभरणधारणामु
भयोरेव हस्तयोरुचितं एकत्राधारणमनुचितं शोभाहानिकरं च अत एव हि पुरा भगवतः श्री
निवासस्य शेषप्रियत्वं विज्ञाय पद्मावतीपरिणयकाले दिव्यभूषणानि प्रदिशता आकाशमहा
राजेन हस्तद्वयधारणयोग्यं नागाभरणयुग्ममेव समर्पितं नत्वेकं यथोक्तं भविष्योत्तरपुराणैका
दशाध्याये ॥ नागभूषणयुग्मं च बाहुपूरादिकांस्तथेति भगवतोऽस्य शेषप्रियत्वं च ॥ अनंत म
त्प्रियो लोके न त्वदन्योऽस्ति कश्चनेति ब्रह्मांडपुराणभागद्वितीयाध्यायस्थभगवद्वचनेनशेष श
यनशीलस्य शेषाचलनिवासिनः ॥ सदाशेषप्रियस्यास्य श्रीनिवासस्य शार्ङ्गिणः ॥ द्वितीयदि
वसे चाद्यं भूयोऽभूच्छेषवाहनमिति भविष्योत्तरपुराणभागचतुर्दशाध्यायवचनेन पुराणप्रतिप
न्नैश्चरित्रांतरैश्च प्रस्फुटमवगम्यते॥ पूर्वमाकाशराजेन शेषप्रियस्यास्य भगवतो भावज्ञेन सम
र्पितं शेषाकारभूषणद्वयं कालवशात्प्रमुचितमिति व्याजांतरेण संप्रति कथंचिदेकं भगवतैव सं
पादितं॥ अपरं तन्न्यूनं तिष्ठति तस्माद्धस्तांतरस्यापि नागभूषणांतरं समर्पणीयमेवेत्यभिदधा
नो हस्तांतरस्यापि शेषाकारभूषणांतरं स्वयमेव समर्प्यते उभे अपि नागाभरणशोभाविशेष

जननायां गदाभ्यामेकीकृत्यास्तृतजननयनमनोहारितया समर्पयामास ॥ २८॥ अथ भगव द्दिव्यालयस्थश्रीनरसिंहभगवद्वृत्तांत उच्यते ॥२९॥ पुण्ये स्वामिसरस्तीरे पश्चिमे नृहरिं हरिम् ॥ भक्त्या परमया युक्तः पूजयामास शंकर इति स्कंदपुराणभागांतर्गतसुवर्णमुखरीमाहात्म्यवचनेन नीलकंठस्तु तत्तीरे ध्यायन्नृहरिमादरात् ॥ उमया सह विश्वेशः कंचित्कालमुवास ह इति वामनपुराणवचनेन सद्भक्तनीलकंठार्च्यनृसिंहाय नमोनम इति वाराहपुराणप्रथमभागस्थैकषष्टितमांकचिन्हितैकोनत्रिंशाध्यायाष्टोत्तरशतनामावलीघटकवचनेनाथ स्वामिपुष्करिणीपश्चिमतीरे कंचित्कालं तपश्चर्यां कुर्वतो महादेवस्य प्रत्यक्षविषयतया प्रतिपन्नस्य नृसिंहभगवतः स्वामिपुष्करिणीपश्चिम एव कस्मिंश्चिन्मंदिरे श्रीवैखानसशास्त्रविधानेन समाराध्यमानस्य महादेवतपश्चर्याफलतया प्रादुर्भूत्वाऽभिमानेन तत्साश्चर्येण महादेवस्यापि हि प्रतिष्ठापनं कर्तव्यमिति पुरा कदाचिच्छैवजनेषु विवदमानेषु तदानीं स्थलवासिभिरवैष्णवै राजसभांगतैः अयं श्रीवेंकटाचलः श्रीवैकुंठादानेतुं अप्राकृतश्रीविष्णुक्रीडाचल इति श्रीवेंकटाचलमाहात्म्यं समंतत उद्घुष्यते ईदृशाप्राकृतश्रीविष्णुक्षेत्रे शिवप्रतिष्ठानुचितेति प्रमाणोपन्यासपूर्वकं प्रतिपादयद्भिः कथंचित्ताद्दशोद्यमननिवर्तितेषु तदानीं सर्वे तत्रत्यश्रीवैष्णवा अ

यं श्रीनरसिंहदेवो लक्ष्मीयुक्तो महोग्ररूपः तदातदा शैवजनोपद्रवप्रसंगहेतुभूतश्च वर्तते त स्मादयमितः परं यथापूर्वं प्रसिद्धतरमाराध्यमानश्चेन्महाकलियुगे अस्मिन्यथाविद्याराधनमपि न निर्वर्तिष्यते यत्किंचिदंशलोके चास्य देवस्य नगरविदाहनहेतुदिव्यलोचनमहोग्रदृष्टिवेगेनोपशाम्यते यथोक्तरीत्या शैवजनानामुपद्रवप्रसंगोप्यवर्जनीय एव च स्यात् अतोस्याराधनादिकं संक्षेप्तव्यमिति पर्यालोच्याराधनमेव लोपयामासेति कथां वृद्धजनसंकथितामाकर्ण्य श्रीरामानुजमुनिः पुराणसिद्धस्य दिव्यसूरिदिव्यसूक्तिविषयस्य सद्भक्तनीलकंठाचार्येन रसिंहायनमोनम इति श्रीवेंकटनाथाष्टोत्तरशतनामावल्यां पठनेन बेरांतवच्छ्रीनिवासेन सह प्रतिपन्नैकवस्तुभावस्य क्षेत्राधिपतेरस्य श्रीनरसिंहदेवस्य समाराधनविलोपः क्षेत्राभ्युदयहानिकर इति परिचिंतयन्नस्य देवस्य स्वामिपुष्करिणीपश्चिमतीरे पृथगालयेवस्थाने सत्येव यथोक्तरीत्या शैवजनोपद्रवप्रसंगस्यावकाशः श्रीवेंकटनाथदिव्यालय एव क्वचिदस्य स्थानकल्पने तु नैतत्प्रसंगावकाशः श्रीमदानंदनिलयदिव्यविमानाभिमुख एवायं प्रतिष्ठापितश्चेदस्योग्रदृष्टिवेगे सत्यपि कदाचित्किंचिदाराधनसंकोचे स्वयमेव प्रशांतः सन्नकिंचित्करो भविष्यतीत्यभिदधानः श्रीवेंकटनाथदिव्यालय एवैशानदिग्भागे श्रीमदनंततनयदिव्यविमा

नाभिमुखदृष्टमेनं श्रीनरसिंहदेवं प्रतिष्ठाप्य श्रीनरसिंहदेवार्चनस्थले पराभिभवो नायातीति शास्त्रार्थमपि हृदि कुर्वन्यथाविधिं नित्यमाराधनं निर्वर्तयामास ॥ ३० ॥ अथ श्रीवेंकटाचल मार्गमध्यवर्तिश्रीनरसिंहवृत्तांत उच्यते ॥ ३१ ॥ मार्कंडेयपुराणभागे द्वितीयाध्याये आरुह्य वेंकटं शैलं मध्येमार्गे ददर्श सः ॥ नारसिंहगुहास्थानं लोके विख्यातवैभव ॥ लक्ष्मीनृसिंह प्रल्हादवरदानंदवैभव ॥ दासानुदासं देवेश मां पाहि मधुसूदन इति प्रणम्य सिद्धये स्वामिपुष्करिणीं गत इत्यत्र शुद्धाख्येनागरुत्यशिष्येण सह श्रीवेंकटाद्रिमारोहतस्तीर्थयात्रापरस्य श्रीमार्कंडेयमहामुनेः पर्वतमार्गमध्ये श्रीनारसिंहगुहास्थाने श्रीलक्ष्मीनरसिंहप्रत्यक्षविषयः समपद्यत तं च लक्ष्मीनरसिंहमभिवंद्यैव स महामुनिः ततः स्वामिपुष्करिणीं गत इत्यभिधानेन तादृशस्थानविशेषे दर्शितविशेषे चरित्रप्रत्यभिज्ञानाय श्रीलक्ष्मीनरसिंहस्थानं कल्पनीयमिति रामानुजमुनिः पर्यालोच्य तत्र पुराणोक्तरीत्या लक्ष्मीनरसिंहं प्रतिष्ठाप्य नित्यमाराधनं निर्वर्तयामास ॥ ३२ ॥ अथ श्रीवेंकटनाथचुबुकसमर्प्यमाणघनसारचूर्णदिव्यालयगोपुरद्वारनिबद्धलोहखनित्रसंबंधिवृत्तांत उच्यते ॥ ३३ ॥ श्रीरामानुजमुनिना श्रीवेंकटनाथकैंकर्याय चोदिते अनंतार्ये महत्या श्रद्धया अनितरसापेक्षमेवेदं कैंकर्यं निर्वर्तनीयमित्यत्यध्यवस्य

कठोरगर्भयापि निज देव्या सहैव पुष्पारामार्थं स्वयमेव खनित्रमादाय तटाकं खनति मृद्भार
मूढ्वा गच्छंत्या देव्याः श्रममसहमानस्य स्वयं तद्भारमादाय गच्छतः श्रीनिवासस्य व्यापारं
स्वीयेतरनिरपेक्षनिर्वर्तनीयतामनोरथविरोधनं मत्वा कुपितेनानंतार्येण खनित्रेण श्रीवेंकटना
थस्य चुबुकदेशे प्रहारे कृते पश्चाद्दिव्यालये चुबुकगलद्रुधिरधारं भगवंतमालोक्य चकितमा
नसे अनंतार्ये अहो एष एव भगवान्वेषांतरेण मां तथामोहयदिति परिचिंत्य तत्क्षणे चु
बुकव्रणे विषमक्षतपुष्पधूलीं निधाय भगवंतमपराधं क्षामयति ततश्च भगवानाश्रितवात्स
ल्यजलधिः श्रीनिवासोऽनंतार्यकैंकर्यश्रद्धाभूमानमभिवीक्ष्य संतुष्टः सन्भो अनंतार्य कैंकर्य
श्रद्धाभूमशालिना भवता खनित्रेण कृतोऽयं मदीयचुबुकगतव्रणः किणीभूतः सन्नसुचिरं मम
वक्षसः श्रीवत्सइववदनमंडलस्याप्येकंसुभगतमं लांछनं भविष्यति त्वमत्र मा शोकं कृथा इति
तं परिसांत्वयन्नितः प्रभृतीदृशवृत्तांतप्रत्यभिज्ञानाय मदीयचुबुके सुगंधिघनसारचूर्णः सर्वदा
समर्पणीयः येन च खनित्रेण ममायं व्रण उदपादि तदेतत्सकलजनसंदर्शनयोग्ये मदीयाल
यगोपुरे क्वचिदुत्तुंगप्रदेशे स्थापनीयमिति स्वयमेव व्यवस्थामारचयामास ॥ ३४ ॥ ततः प्र
भृति सदा प्रतिदिनमाराधनसमये भगवतः श्रीनिवासस्य चुबुके सुगंधिघनसारचूर्णः सम

पर्यंते ॥ ३५ ॥ तदेतत्खनित्रमपि तत एव हेतोः श्रीवेंकटनाथदिव्यालयगोपुरे निबद्धं सकलमनुजनयनदृशं सन्निधे ॥३६॥ अथ श्रीवेंकटनाथस्य श्रीकन्यामासमहोत्सवे सप्तमदिनसायंतनोद्यानविहारोत्सवे क्रियमाणप्रदक्षिणयात्रायाः अष्टमदिनप्रातस्त्यरथोत्सवयात्रायां क्रियमाणानंतार्यजामातृभावव्यवहारस्य च हेतुभूतो वृत्तांत उच्यते॥३७॥ श्रीरामानुजमुनिचोदितेऽनंतार्ये श्रीवेंकटाद्रौ विपुलतमं नंदनवनं तदाधारं तटाकं च निर्माय निरवधिकपुष्पमालासमर्पणकैंकर्येण भगवंतं श्रीवेंकटनाथमानंदयेति स भगवाञ्छ्रीनिवासः परमकारुणिकआश्रितवात्सल्यैकजलधिः स्वाश्रितस्यानंतार्यस्य निरवधिकपुष्पकैंकर्यं निरतिशयप्रीत्या स्वात्मना परिगृहीतमित्यंशं तदीयनिरतिशयकैंकर्यश्रद्धागर्भभावशुद्धिं च सर्वेषां प्रकाशयितुकामः कदाचित्स्वयं परिगृहीतराजकुमारवेषः तथाविधवेषशालिन्या निजमहिष्या श्रीपद्मावतीदेव्या सह रजनीषु तदीयं पुष्पारामं प्रविश्य स्वैरविहारं कुर्वन्पुष्पपल्लवफलाद्यपचयेन तदुद्यानं व्याकुलीचकार ॥ ३८ ॥ तदनु रजनीषु क्रियमाणां पुष्पोद्यानवैयाकुलीमनंतार्य आलोक्य को नु वा चोर इत्थं कदर्थयति भगवदुद्यानमिति व्याकुलमनाः स्वयं दत्तावधानोऽपि चोरमलभमानः इत्थमष्टसु दिनेषु गतेषु नवमदिनरात्र्यां कृपयैव हस्तवशंगतौ राजदंपतीवेषच्छिन्नौ श्री

पद्मावतीश्रोनिवासौ लतापाशेन क्वचन तरौ बद्धमाकर्षन्कथंचित्तद्धस्तौ विमोच्य भगवति भ्र
शकातरभावमापन्ने तदनुधाविते द्रुततरमप्रदक्षिणमेव वीथीं परिक्रम्य निजमंदिरं प्रति पला
यिते तदनु पलायितुमशक्नुवंतीं राजमहिषीवेषां पद्मावतीं कुत्रचिच्चंपकतरौ निबध्य भर्त्सयंस्त
दीयवृत्तांतं कृत्स्नमपि पृच्छन्नाप्रभातं सावधानः पार्श्वं एव तस्थौ ॥ ३९ ॥ सापि पद्मावतीदेवी
भो अनंतार्य तं मत्पतिं त्वं गृहाण नारीमनपराधिनीं मुंच अहं ते पुत्रीभवामीति तं प्रार्थयंती त
स्थौ ॥ ४० ॥ ततः प्रातःकाले सर्वेषु परिजनेषु भगवन्मंदिरमागत्य भगवद्वक्षसि कंठिकालयां
पद्मावतीदेवीमवीक्षमाणेष्वर्चकान्निर्बध्नत्सु भगवदाविष्टेन केनचित्पुरुषेण यथावज्ज्ञापितवृत्तां
तेषुभगवदाज्ञया देवीमनंतार्यं चानेतुमुद्यानमागतेषु विदितवृत्तांतोऽनंतार्यो देवीं चंपकतरुबं
धनाद्विमोच्य क्षामयित्वा कृतनृत्यकृत्यः प्रागुक्तनिजवाचं सत्यां चिकीर्षुः परिगृहीतपुत्रिकाभा
वां परिणययोग्यकन्यकादशाऽपन्नां भगवतीं पद्मावतीं पुष्पपिटकया सह कक्षे बिभ्राणो भगव
दुपकंठमागम्य भगवंतं क्षामयन्देवीमर्पयामास ॥ ४१ ॥ स च भगवान्निजां कांचनमालाम
नंतार्यकंठे प्रीत्याऽर्पयन् देवीं प्रतिजग्राह ॥ ४२ ॥ तदनु पश्यत्सु सर्वेषु सा देवी भगवतो व
क्षसि कंठिकायामेव यथापुरं परिगृहीतरूपातस्थौ ॥ ४३ ॥ तामिमां कथां शृण्वञ्छ्रीश्रीरा

रामानुजमुनिर्विदितपूर्वकथावृत्तांतः श्रीनिवासस्याऽनंतार्येऽभिमानातिशयं विदित्वा प्राग्भग
वत्कृततदीयचरित्रविशेषप्रत्यभिज्ञापकव्यवस्थाविशेषवत्स्वयमप्येतत्कथाप्रत्यभिज्ञानायव्य
वस्थामित्थमारचयामास इतःप्रभृतिप्रतिवर्षं श्रीकन्यामासब्रह्मोत्सवे सप्तमदिनेसायंतनोद्या
नविहारोत्सवे प्राक्तनाप्रदक्षिणकांदिशीकयात्राप्रत्यभिज्ञानायप्रदक्षिणमेव भगवतोयात्राक
र्तव्या अनंतार्याय प्राग्गीत्या तदीयनंदनवनयात्रासु भगवतो मालाप्यर्पणीया अष्टमदिने रथो
त्सवयात्रायामनंतार्येण जामातृभावनया भगवते श्रीनिवासाय नवीनवस्त्रसमर्पणमपि कर्त
व्यमिति ॥४४॥ तदाप्रभृति यथोक्तरूपा प्रक्रिया प्रतिवर्षमनुष्ठीयते ॥४५॥ अथ धनुर्मासे श्री
कृष्णभगवतोदिव्यपर्यंकशयनभोगनिर्वर्तनवृत्तांत उच्यते ॥४६॥ श्रीवेंकटनाथदिव्यालये प्रति
दिनंस्नपनबेरभूतस्य श्रीमत्सुंदरस्वाम्यपरनामधेयस्य भोगःश्रीनिवासभगवत एव शय्याबेर
तयानित्यं दिव्यपर्यंकतल्पभोगलीलारसे श्रीवैखानसागमोक्तविधानेन निर्वर्त्यमाने भगवा
न्छ्रीरामानुजमुनिः श्रीवैखानसशास्त्रे क्वचित्संहिताया विद्यमानं धनुर्मासे श्रीकृष्णभगवतो दि
व्यपर्यंकशय्याभोगलीलानिर्वर्तनाविधिं बेरत्रयपक्षे सर्वदैव श्रीकृष्णभगवत एव शय्याबेरतया
तल्पभोगलीलानिर्वर्तनविधिं च दृष्ट्वा श्रीगोदादेव्या धनुर्मासे श्रीकृष्णभगवता सहैव दिव्यप

र्यंकशय्याभोगलीलारसानुभवकांक्षिण्या दिनेदिनएकैकशोऽनुसंधेयात्रिंशतद्गाथात्मकश्रीव्रताख्यश्रीकृष्णविषयप्राबोधिकदिव्यप्रबंधप्रणयनमर्चावतारेष्वितरापेक्षया श्रीवेंकटनाथे तस्या देव्याः प्रथममादरातिशयकरणस्य गोदाश्रीसूक्ताख्यतदीयद्वितीयप्रबंधप्रथमगाथायामेव अभिव्यक्ततां च पर्यालोच्य तदीयमनोरथानुगुण्येन विधानबलेन च श्रीवेंकटनाथ एव श्रीकृष्णरूपी संस्तस्यै दिव्यपर्यंकशयनभोगलीलारसं प्रदिशतीति भावनया धनुर्मासे कृत्स्नेऽपि श्रीकृष्णभगवत एव दिव्यपर्यंकशयनभोगलीलारसो निर्वर्तनीयः तदितरमासेषु तु भागश्रीनिवासभगवता श्रीसुंदरस्वाम्यपरनामधेयस्य तादृशभोगलीलारसो निर्वर्तनीय इति व्यवस्थामारचयामास ॥ ४७ ॥ तदाप्रभृति धनुर्मासे श्रीकृष्णभगवतएव दिव्यपर्यंकशयनभोगलीलारसो निर्वर्त्यते ॥ ४८ ॥ अथ श्रीवेंकटाद्रिसमारोहणसोपानसरणिसमारंभस्थलस्थिततिंत्रिणीवृक्षमूलस्थितश्रीवेंकटनाथदिव्यचरणारविंदयुगलसंबंधिवृत्तांत उच्यते ॥ ४९ ॥ श्रीयामुनमुनिचोदिते श्रीशैलपूर्णार्ये श्रीवेंकटाद्रौ वासं कृत्वा तिसृष्वपि संध्यासु श्रीवेंकटनाथमभिवंद्य प्रतिदिनं भगवदभिषेकार्थमाकाशगंगातीर्थमानीय समर्प्य सततं तदीयनिरवधिकैश्वर्यसमृद्ध्यर्थं मंगलाशासनैकपरायणे वर्तमाने सति श्रीयामुनमुनिना परमपदं गच्छता महापूर्णश्रीशै

लपूर्णश्रीगोष्ठीपूर्णश्रीमालाधरगुरुप्रभृतिषु रामानुजार्थं मयानिधिवद्गोपनीयाएकैकविशेषार्था
शा निक्षिप्ताः तं च यथावसरं रामानुजेनाधिगंतव्याः स यदि मज्जीवितसमय एवेहागमिष्य
ति सर्वानिमानंशान् मत्तएवाधिगतवान्भविष्यति स चास्मदीयदैवदुर्विपाकेन मज्जीवितसम
ये मदुपकंठं नायातः स चावश्यमितोऽविलंबेनैव कालेन श्रीविष्णुमतमधिगमिष्यति स्था
पयिष्यति च तत्सकलेतरवादिदुर्धर्षं तदासमयमधिगम्य मया भवत्सु निक्षिप्ता अर्था अव
श्यमेव तं लंभनीया इति शिष्यान्प्रत्यादिष्टेषु विशेषार्थेषु श्रीशैलपूर्णार्यनिकटे वर्तमानाच्छ्री
रामायणविशेषार्थानधिगंतुमागताय श्रीरामानुजमुनये स्वाचार्यनियमनमनुसंदधानः श्रीशैल
पूर्णार्यो महाप्रीतिपुरःसरं श्रीरामायणविशेषार्थानुपादिशत् ॥ ५० ॥ तदानीं श्रीरामानुजमु
नौ श्रीवेंकटाद्रेरुपरिष्टाद्वासमपचारभयादसहमाने श्रीशैलपूर्णार्यश्च स्वयं स्वाचार्यनियमि
तं श्रीवेंकटनाथनित्याभिषेकतीर्थानयनकैंकर्यं नित्यश्रीनिवासमंगलाशासनं च विसृज्य वर्ति
तुमशक्नुवन्भो रामानुजमुने प्रतिदिनं श्रीरामायणपाठार्थं तव मम च समागमस्थलं श्रीवेंक
टाद्रिसमारोहणसोपानसरणिसमारंभस्थलस्थिततिंत्रिणीमूलगतगंडशैलाधःप्रदेशो भवितुम
र्हति अहं श्रीवेंकटाद्रौ प्रातराराधनपरिसमाप्त्यनंतरं भगवतः प्रसादमपि गृहीत्वा तत्रागमि

ष्यामि तवापि दास्यामि त्वमपि श्रीपदपुरीतः कृतप्रातराण्हिकस्तत्राऽगच्छ ततस्तत्र श्रीरामायणपाठो भविता यागानुयागावपि तत्रैव चाहं करिष्यामि तवापि माध्यंदिननियमजाते कृत्स्ने निर्वृत्ते पुनः पाठो भविता ततः सायंतनभगवदाराधनाय श्रीवेंकटाद्रिमेवाहं गमिष्यामि त्वं च श्रीपदपुरीं गच्छेति व्यवस्थां कृत्वा तथैव निर्वर्तयन्नेकं संवत्सरं श्रीरामानुजमुनिं श्रीरामायणविशेषार्थान्स्वाचार्योपदिष्टान्यथावदध्यापयामास ॥ ५१ ॥ इत्थं वर्तमानः श्रीशैलपूर्णार्यः कदाचिच्छ्रीवेंकटनाथं सायंतनाराधनकाले निषेव्य गृहमागत्य रात्रौ शयनकाले भगवंतं ध्यात्वा भगवन्श्रीवेंकटनाथ श्रीनिवास भगवद्यामुनमुनिकटाक्षवशादद्यपर्यंतं त्वं त्रिसंध्यमेव सेवां प्रसादयन्नवात्सीः इदानीं तु श्रीरामायणपाठनिमित्तेन माध्याह्निकाराधनसमयसेवा दुर्लभा समपद्यतेत्यनुसंदधानः सुष्वाप॥ ५२॥ तदनु लब्धनिद्रः श्रीशैलपूर्णार्यो रात्रौ संजाते स्वप्ने भोः श्रीशैलपूर्ण तव माध्याह्निकसमाराधनसेवामपि प्रादिशं त्वं शोकं मा कृथा इति सन्मुखस्थितेन श्रीवेंकटनाथेनाभिहितः सन्प्रातःप्रबुद्धो यथापुरमेव गगनगंगातीर्थादभिषेकतीर्थमानीय समर्प्य भगवतः प्रथमाराधनसमयसेवामपि लब्ध्वा ततः श्रीरामायणपाठप्रदानाय पर्वतोपत्यकातिंत्रिणीमूलगंडशैलमागतस्तत्रागत्य निरीक्षमाणाय रामानुजमुनये

श्रीरामायणं पाठयन्नवात्सीत् ॥ ५३ ॥ ततो मध्याह्नसमये समंततो मृगमदः कस्तूरीघनसारकुंकुमकुसुमबहुलपरिमलघुमघुमितदशदिशश्चंदनकुसुमतुलसीदलपटलसत्कृतौ श्रीवेंकटनाथदिव्यांघ्री तत्रत्यगंडशैलोपरि प्रादुरभूताम् ॥५४॥ ततश्च श्रीशैलपूर्णश्रीरामानुजमुनी समंततः प्रसर्पंतं दिव्यपरिमलं जिघ्रंतौ किमेतदिति विचारयंतौ सद्यः समुत्थितौ समंततः पश्यंतौ तत्रत्यगंडशैलोपरि यथोक्तवेषौ श्रीवेंकटनाथदिव्यांघ्री सविस्मयं ददृशतुः॥इत्थं प्रादुर्भूतौ भगवद्दिव्यांघ्री संपश्यञ्छ्रीशैलपूर्णार्यो निजस्वप्नवृत्तांतमपि रामानुजमुनये निवेद्य तेन सह प्रहृष्टांतरंगो बभूव ॥ ५५ ॥ ततस्तावुभावपि संजातविस्मयौ स्वयं व्यक्तं तत्तद्दिव्यांघ्रियुगलं निषेव्य तदधस्तात्तस्मिन्नेव गंडशैले तेनांघ्रियुगलेनैकशरीरतया दिव्यसूरीनवतार्य तत्र दिव्यालयमपि कंचिन्निर्माप्य प्रतिष्ठार्चनादिकमपि श्रीवैखानसागमोक्तविधिनैव निर्वर्त्य तीर्थप्रसादान्वयमपि कृत्वा तमपि तिंत्रिणीवृक्षमस्वप्नचिंचातरुसमानवेषं भगवद्दिव्यांघ्रिप्रादुर्भावतः प्रागेव तदर्थं कृतसन्निधानं भगवंतमनंतमेव मन्वानौ ततः कतिपयकालेन तद्दिव्यांघ्रियुगलसंनिधावेव श्रीरामायणग्रंथप्रवचनसमापनशांतिमपि निरवर्तयताम् ॥ ५६ ॥ ततः परमकारुणिको भगवान्रामानुजमुनिः कलौ वेंकटनायक इति प्रसिद्धवैभवं विशेषतः कृ

रकलौ नराणां पापात्मकानां परपीडकानाम् ॥ भूगोलमध्ये द्रविडे च पुण्ये श्रीवेंकटाद्रिर्गति रेव नान्येति श्रीभविष्योत्तरपुराणांतर्गताशीतितमांकाचिन्हितश्रीवेंकटेशरहस्याध्यायवचनोक्तसुप्रसिद्धवैभवश्रीवेंकटाचलशिखराधिष्ठितं कलौ पुनः पापरताभिभूते समुद्बभूवाश्रितवत्सलत्वात् ॥ अर्चात्मना सर्वजनान्सुगोप्तुं विश्वाधिको वेंकटभूधरेंद्र इत्यादिवचनोक्तरीत्या वर्णाश्रमभेदमंतरेण सकलमनुजसंरक्षणार्थमवतीर्णं श्रीवेंकटनाथमभिवंद्य धन्यतां प्राप्तुं स्वरूपयोग्यतायाः सर्वेष्ववशिष्टतया पंचमवर्णस्थभगवद्दासानामशेषाणामन्येषां चानर्हवरवर्णजानां श्रीवेंकटाचलारोहणाधिकाराथोगेन ते सर्वेपि श्रीवेंकटाचलदक्षिणशिखरदरीस्त्राविब्राह्मणवर्णादिसंबंधिसुप्रसिद्धतीर्थपंचके चरमे चंडालतीर्थे स्नाताः शुद्धवसनाः संतस्तदिदं स्वयंव्यक्तं श्रीवेंकटनाथदिव्यांघ्रियुगलं सन्निकृष्य निषेव्य प्रदक्षिणप्रणामादीन्कुर्वन्तो धन्याः समुज्जीवंत्विति व्यवस्थामारचयामास ॥ ५७ ॥ एवं श्रीवेंकटगिरियात्रां कुर्वंतः सर्वेपि जनाः श्रीवराहपुराणप्रथमभागस्थद्विषष्टितमांकचिन्हितत्रिंशाध्याये घुष्यंतः संघशश्चोच्चैर्गोविंदेति पुनःपुनरिति पुरा सूतमुखश्रुतश्रीवेंकटगिरिमाहात्म्यानां तद्गिरियात्रार्थं प्रस्थितानां महर्षीणां भगवन्नामांतराण्यपेक्ष्यः सदा गोविंदकीर्तनमित्युक्तश्रीगोविंदनामधेयस्यैवोच्चैःस्वरेण

घोषणपूर्वकं श्रीवेंकटगिरियात्राकरणप्रतिपादनदर्शनेन संप्रत्यस्य श्रीवेंकटाचलस्य मध्ये प्रसक्तदेवतांतरसंबंधित्वप्रावादभंजनाय तदेव श्रीगोविंदनामधेयमुच्चैःस्वरेण मुहुर्मुहुर्घोषयंतः तेन च श्रीवेंकटाचलोऽयं श्रीविष्णुक्षेत्रमेवेति पंडितपामरसाधारण्येन सर्वजनेभ्यः ख्यापयंतः सुदूराद्भगवत्सेवाकांक्षया समागच्छतां सेवार्थं परमकरुणया गिरेरुपत्यकायामेवाविर्भूतमिदं चरणारविंदद्वयं निषेव्यैव श्रीवेंकटाचलं समारोहंतु भगवत्सेवार्थमिति च व्यवस्थां स रामानुजमुनिश्चकार ॥ ५८॥ अथ श्रीवेंकटनाथदिव्यालये विराजमानस्य श्रीसीतालक्ष्मणहनूमत्सुग्रीवांगदसमेतस्य श्रीरामचंद्रस्य संबधी वृत्तांत उच्यते ॥ ५९ ॥ पुरा खलु ॥ कृतमालानदीतीरे विश्वंभरकृते हरिः ॥ आविरासीद्रघुवरो बिभीषणभयापह इति वासिष्ठरामायणोक्तरीत्या कृतमालाख्यनदीतीरे दक्षिणमथुरानगरीतः प्रतीच्यां दिशि कलविंकावतारनाम्नि नगरे विश्वंभरनाम्नि महामुनौ श्रीरामस्य आनयैनं हरिश्रेष्ठदत्तमस्याभयं मयेत्युक्तश्रीविभीषणाभयप्रदानचरित्रश्रवणविद्धहृदये श्रीविभीषणाभयप्रदानसमयसन्निवेशविशेषविशिष्टं श्रीरामं साक्षात्कर्तुं तमुद्दिश्य तपश्चर्यां कुर्वाणे सति स भगवाञ्छ्रीरामस्तस्मिन्महामुनावाश्रितकृपापरवशः कदाचित्स्वप्ने तस्मै स्वात्मानं लक्ष्मणं चोभौ धनुर्धरौ स्वनिक

टेविभीषणकृते सर्वं विज्ञाप्य हरिपुंगवः ॥ यथेष्टं कुरु राजेंद्रेत्युच्चरन्नंजलिं व्यधादित्युक्तरीत्या सुग्रीवमहाराजं श्रीविभीषणार्थं वक्तव्यान्युचितवाक्यानि विज्ञाप्य मया विज्ञापनीयं विज्ञापितं इतःपरं यथामनोरथं त्वं कर्तुमर्हसीत्यभिधायांजलिहस्तमंतिके स्थित्वा सेवमानं हनूमंतं च विभीषणपरिग्रहार्थं स एष देशः कालश्चेत्यादीनि समुचितवचनानि सन्निकृष्याभिदधानं तिष्ठंतं अंगदं च॥वालिसूनुर्महातेजा बिभीषणमुपस्थितं॥दर्शयंस्तं तदाकाशे निर्दिश्योद्धृतपाणिनेत्युक्तरीत्या खस्थं बिभीषणमंगुल्या निर्दिश्य प्रदर्शयंतं च स्थितं दर्शयन्वासिष्ठरामायणोक्तयथोक्तवेषानिमान्सर्वान्सम्यक्साक्षात्कारयामास॥६०॥स विश्वंभरो महामुनिरित्थं स्वप्ने स्वमनोरथानुगुणसन्निवेशविशेषपरिजनविशिष्टं श्रीरामं स्वयैव कृपया प्रदर्शितंसपरिवारंसाक्षात्कुर्वन्नप्रबुद्धस्तास्मिन्स्थानविशेषे तथाविधपरिजनवेषविशिष्टं श्रीराममर्चारूपेणावतार्यसमाराधयन्नभिमतां सिद्धिमलभत॥६१॥ ततःप्रभृति तस्मिन्स्थलेसमाराध्यमानेयथोक्तपरिवारसमेते श्रीरामे कदाचित्तस्मिनूकलविंकावतारनगरे कस्मिंश्चिन्महाकलहे प्रसक्ते कस्मैचिद्भक्ताय भो मामद्य श्रीवेंकटाद्रिं सपरिवारंनयेति स्वप्नंप्रदिशतिस च भक्तस्तंसपरिवारमेव नयञ्छ्रीवेंकटाद्रेरुपत्यकायां तिंत्रिणीवृक्षमूलस्थगंडशैलसन्निधौ श्रीरामायणप्रवचनपरायणयोः श्रीशैल

पूर्णश्रीरामानुजमुन्योस्तदानीं श्रीविभीषणाभयप्रदानघट्टं विचारयतोः सविधं निनाय॥६२॥
तौ च श्रीशैलपूर्णार्यश्रीरामानुजमुनी अचिंतितमागतांस्ताञ्छ्रीरामलक्ष्मणसुग्रीवहनूमदंगदा
ञ्छ्रीविभीषणाभयप्रदानदशासमुचितवेषानभिवीक्षमाणौ तेषांस्थानागमनकारणादिवृत्तांतम
पिश्रुतवंतौ भृशसंतुष्टौ नूनमेते यथा पुरा बिभीषणमभयप्रदानेनानुजग्रहुःतथैव तदभयप्रदान
घट्टमेव विचारयतोरावयोरप्यभयप्रदानमेव चिकीर्षवस्तदनुगुणलक्षणाःसमायाता इत्यनुसं
दधानौ तस्यैतस्य श्रीविभीषणाभयप्रदानकारिणः श्रीरामस्य पुरा रावणभवनागतश्रीजान
क्यासमावेशवदिहापिश्रीजानक्यासमावेशः संपादनीय इति मन्वानौ श्रीमतीं जानकीदेवीम
र्चारूपेण शुभदिने शोभनमुहूर्ते अवतार्य यथाविधि प्रतिष्ठाप्य सर्वांश्च ताञ्छ्रीवैखानसागमो
क्तविधानेन संप्रोक्ष्य श्रीजानकीश्रीरामयोर्यथाविधि विवाहमंगलोत्सवमपि निर्वर्त्य मंगलाशा
सनेन तदीयसतताराधनाभिवृद्धिमाशासानौ मथितं दुग्धांभोनिधिमधिशय्यचकालनेमिमुक्ती
र्थे॥क्षुभितैंद्र्यनुजसहायाभवितुं समुपेत्य राघवीभूय॥निबिडान्सप्तचवृक्षान्विध्वा बाणेन वेंक
टं गंतुः॥ पत्युः पादावेवप्राप्य प्रतिवासरं समाश्वसतेत्येवमर्थांश्रीमच्छंदोवृत्ताख्यश्रीभक्तिसा
रदिव्यसूरिसंहितास्थैकाशीतितमगाथां सत्यां चिकीर्षुःश्रीवेंकटाद्रौ श्रीश्रीनिवासभगवद्दिव्या

लय एव तान्विराजमानान्कृत्वा प्रतिवर्षमेतयोरेतंविवाहमंगलोत्सवं श्रीरामनवमीसमनंतरदि
वसे विधातव्यं व्यवस्थाप्य नित्याराधनं च निर्वर्तयामासतुः ॥६३॥ अथ श्रीवराहभगवत्संबं
धिवृत्तांत उच्यते॥६४॥पाद्मपुराणभागस्थैकोनत्रिंशांकचिन्हितषष्ठाध्याये गोक्षीरैर्हैमकुंभस्थै
र्वल्मीकविवरोदरं॥अनुस्यूता छिन्नधारैरचभिषेक्तुं प्रतिक्रमे॥क्रियमाणेऽभिषेके तु वल्मीकविव
रांतरात्॥आविर्बभूव भगवान्वराहवपुरीश्वर इत्यादिना प्रतिपादितावतारे वैभवस्य एवं प्राय
शः सर्वेष्वेव श्रीवेंकटाचलमाहात्म्यपरपुराणभागेषु प्रतिपादितसुप्रसिद्धवैभवस्य श्रीस्वामिपु
ष्करिणीपश्चिमतीरे विराजमानस्यास्य श्रीवराहभगवतःश्रीश्रीनिवासभगवतः प्रागेव श्रीवें
कटाचले कृतसंनिधानत्वेऽपि ब्रह्मादिभिः श्रीश्रीनिवासभगवत एवेतः पूर्वं प्रबलमहोत्सवादी
नांनिर्वर्तनस्य पुराणप्रतिपन्नतया अधुना तस्यैवोत्सवादीनां क्रियमाणतया च तदीयोत्सवसं
कोचकरणायोगात्॥रथ्याबल्यंतरे देवं बलिहोमविवर्जितं॥ आराधयेदप्रधानं न कुर्यादुत्सवा
दिकमिति श्रीवैखानसशास्त्रानंदसंहितावचनेन एकस्मिन्क्षेत्र एकरथ्याबलयर्चनांतरालस्थित
योर्द्वयोर्देवयोः समप्राधान्येन बलिपीठार्चननित्यहोममहोत्सवादीनामकर्तव्यतायाः द्वयोरेक
स्याप्रधानी कृतस्य बलिहोमविवर्जितनित्याराधनमात्रस्य कर्तव्यतायाश्च प्रतिपन्नत्वाच्चास्य

श्रीवराहभगवतो बलिपीठार्चननित्यहोममहोत्सवादीन्विना त्रिसंध्यमर्चनादिकं परं कर्तव्यं॥ तदपि ब्राह्मपुराणेऽष्टमाध्याये॥ उवाच वचनं चेदं सर्वलोकस्य पश्यतः॥ वराहतीर्थनाम्ना च भागोऽयं प्रथितो भवेत्॥ योऽत्रायाति हरिं सोऽत्रनास्नात्वैवाशुचिर्नमेत्॥ वराहदर्शनात्पूर्वं श्रीनिवासं नमेन्न च॥दर्शनात्प्राग्वराहस्य श्रीनिवासो न तृप्यते॥इति कृत्वा व्यवस्थां स परमेष्ठी पितामहः॥ दृष्ट्वाथ श्रीनिवासं च स्तुत्वा च विविधैः स्तवैः॥ पादौ प्रगृह्य देवस्य ययाचे वरमुत्तमम्॥ मत्तश्चापि वराहस्य पूर्वं स्यात्पूजनं हरेः॥ दर्शनस्नानदानाद्यैरित्युक्तोथ श्रियःपतिः॥ तथास्त्विति वरं दत्वा कारयामास तत्तथेति वचनैः॥ततो निषादं तं प्राह किटिरूपी हरिः स्वयम्॥ पूर्वं सेव्यं विमानं मे तीर्थं च श्रीनिवासतः॥ततः प्रभृति तत्तीर्थं पूर्वसेव्यं बभूव हेति वचनेन॥भविष्योत्तरपुराणे पंचमाध्याये श्रीवराहभगवतः श्रीनिवासभगवत्संवादे॥दैवेनदृष्टवानस्मि त्वामद्येहधराधरं॥ अत्रैव निवसामीति संकल्पो मम वर्तते॥ स्थलं देह्यवनीकांत यावत्कलियुगं भवेत्॥ इति तेन स विज्ञप्तो वराहवदनो हरिः॥ प्रोवाच वचनं देवं स्थलं मौल्येन गृह्यताम्॥ इति वाक्यं ततः श्रुत्वा प्रोवाच मधुरं वचः॥ प्रथमं दर्शनं चास्य नैवेद्यं क्षीरसेचनं॥इदमेव परं द्रव्यं ददामि करुणानिधे॥ दास्यामि यत्ते भूकांत तदंगीकुरु माधव॥ वरं द्रव्यमिदं तात कृ

पां कुरु कृपानिधे ॥ इत्युक्तो हरिणा पोत्री हरये स्थानकांक्षिणे ॥ तदा ददौ स्थलं पादशतमात्रं रमापतेरिति वचनैश्च श्रीवेंकटनाथात्प्रागेव कर्तव्यं यात्रापरैस्तदीयतीर्थविमानादिसेवनमपि च प्रागेवकर्तव्यमिति व्यवस्थांकृत्वातदानीं श्रीवराहभगवदुत्सवमूर्तिमप्यवतार्यप्रतिष्ठाप्यैकस्मिन्दिनेअस्याद्यैवोत्सवो निर्वर्तनीय इति श्रीवेंकटवराहाय स्वामिपुष्करिणीतटे॥श्रवणर्क्षतुलामासे प्रादुर्भूतात्मने नम इत्युक्ततुलामासश्रवणे श्रीवराहदेवावतारदिव्यनक्षत्रभूते श्रीवराहदेवतां च विशेषोत्सवो निर्वर्तनीय इति च भगवान्रामानुजमुनि र्व्यवस्थापयामास ६६

अथ श्रीवेंकटनाथदिव्यालयसंबंधिसर्वकार्यनिर्वाहकप्रधानपतित्वलक्षणपारिपत्याधिकारवाहिनः श्रीवैष्णवस्य मर्यादाविशेषनिर्वर्तनवृत्तांतउच्यते॥ श्रीवेंकटनाथाभिमानांतरभूते श्रीपदपुरीदिव्यदेशे क्रिमिकंठचोलोपद्रवव्याजेन श्रीचित्रकूटाधिनाथे श्रीगोविंदराजे समागम्य श्रीवेंकटनाथदिव्यैश्वर्येण स्वीयसकलोत्सवभोगसाम्राज्यमनुभवति श्रीवेंकटाद्रिश्रीपदपुर्योरुभयोरेकदिव्यदेशताया व्यवस्थापनानंतरं श्रीवेंकटाद्रौ भगवद्दिव्यालये प्रतिदिनं रात्रौ भगवतःपर्यंकासनभोगावसाने भगवदाराधकः श्रीशठकोपं परिग्रहच्छत्रचामरोपचारकथितं द्वारसंमुखं श्रीकृष्णमंडपं समानीय दक्षिणाभिमुखतिष्ठत्परिचारकै भगवतः प्रवहति भोः श्री

वेंकटनाथ श्रीचित्रकूटाधिनाथ सर्वकैंकर्यधुरंधर श्रीवेंकटाद्रिदिव्यसंस्थानसर्वकार्यनिर्वाहक विष्वक्सेनेति बिरुदमभिदधानैः समाहूतस्यैषोऽहमस्मि दास इति संनिधिमुपगतस्य श्रीवेंकटनाथदिव्यालयपारपत्याधिकारवाहिनः श्रीवैष्णवस्य भगवच्छीर्षवस्त्रे मस्तके निबध्यमानः श्रीशठकोपप्रदानलक्षणसपर्यां कुर्यात् तदनंतरमेव च भगवन्मंदिरकवाटबंधनमुद्राकरणादिपूर्वकं मंदिरकार्यसमापनं कार्यमिति व्यवस्थामपि भगवान्रामानुजमुनिराख्ययामास ॥ ॥ ६७ ॥ इत्यनंतार्यगुंफितायां श्रीवेंकटाचलेतिहासमालायां पंचम स्तबकः ॥ ५ ॥ ॥

अथ श्रीशैलपूर्णार्यवृत्तांत उच्यते ॥ १ ॥ पुरा खलु भगवान्यामुनमुनिः सकलतंत्रपारावारपारीणश्रीरंगदिव्यक्षेत्रमध्यासीनो निजांतेवासिभिः सकलवेदान्तरहस्यपारदृश्वभिर्बहुभिः श्रीवैष्णवैःसह सकलशास्त्रार्थप्रवेचनपूर्वकं परमवैदिकसिद्धांतशिखिरतं श्रीवैष्णवदर्शनं वर्धयञ्छ्रीरंगनाथमंगलाशासनैकपरायण स्तदीयगुणानुभावकैंकर्यप्रवणो बभूव ॥ २ ॥ तदानीं कदाचित्तस्मिन्यामुनमुनौ श्रीमुखसूक्ताभिख्यायां श्रीपरांकुशदिव्यसूरिद्राविडब्रह्मसंहितायां तृतीयकांडे तृतीयश्रीमुखसूक्तमनुसंधाने तदर्थानुसंधान विद्धहृदये श्रीपरांकुशदिव्यसूरिणा प्रपन्नजनकूटस्थेन श्रीवेंककटनाथे किल स्वरूपानुरूपा पुष्कला प्रपत्तिरनुष्ठितापरमपुरुषार्थभूतं कैंक

यमपि चेहैवप्रार्थितं परमप्राप्यभूतपरमपदवासिनोऽपि नित्यसूरयोत्रैव किल भगवदाराध
नार्थाञ्छ्लाघ्यान् दीपधूपादीन्सादरमूढ्वा समानीय समर्पयंतः कृतार्थतां लभंते ॥ ३ ॥ अस्मि
दिन्व्यदेशेभगवतोऽभिषेकार्थं सुगंधिदिव्यतीर्थं विलक्षणांश्च पुष्पादीन्भगवंतमानंदयितुमि
च्छामि॥४॥कथमीदृशं कैंकर्यं मंदभागधेयस्य मम सुलभं भविष्यतीत्यभिदधाने परमसत्त्वगु
णपरिपूर्णः श्रीशैलपूर्णोऽयं तदंतेवासिष्वन्यतमः स्वयं तन्मनोरथपरिपूर्णाय प्रातिनिधितया
तदभिप्रेतं कैंकर्यं कर्तुमुद्युंजानस्तदनुज्ञां च लब्ध्वा श्रीवेंकटागिरिमासाद्य वासं कुर्वन्भगवद
भिषेकार्थं पवित्रतमं भोग्यतममारोग्यनिदानमघविनाशनपुण्यतीर्थसलिलं भक्त्या श्रीसूक्ता
ख्यकलिवैरिदिव्यसूर्यद्राविडसंहितामनुसंदधानां सादरमनुदिनमानीय समर्पयन्पुष्पादींश्च
यथाशक्ति समर्पयन्भगवंतमानंदयन्नासीत्॥३॥इत्थं श्रीशैलपूर्णार्येण परमभक्तिसंपन्नसादर
मनुदिनं क्रियमाणस्य अघविनाशनतीर्थादभिषेकार्थतीर्थानयनकैंकर्यं स्वात्मना परमप्रीत्या
परिगृह्यत इत्यमुमंशं सर्वे जना अवगच्छंत्विति परिचिंतयन्भगवाञ्छ्रीवेंकटनाथः कदाचित्प
रिगृहीतव्याधाकारो धनुष्पाणिःपापविनाशनतीर्थात्पावनभोग्यं भगवदभिषेकतीर्थं सादरमा
नयंतं श्रीशैलपूर्णार्यं मध्येमार्गमभिगम्य हे तात तृषार्तोऽस्मि तीर्थं मे देहीति प्रच्छिन्ने तास्मिं

श्व रेरेव्याध श्रीवेंकटनाथार्थं मया नीयमानमिदं दिव्यतीर्थं न मनुष्यार्हमिति तं व्याधं प्रत्या
ख्याय श्रीकलिवैरिदिव्यसूर्यसंबंधिमहाश्रीसूक्तानुसंधानपूर्वकंभगवदनुभवजनितहर्षप्रकर्षे
ण तीर्थकुंभं नयत्येव सति स्वयं तत्पृष्ठतोनुगच्छन्धनुःसंहितश्रीनादलाघवेन तं कुंभं पृष्ठभागे
विध्वा छिद्रं कृत्वा लघुधारारूपेण तस्माच्छिद्रान्निस्रुतं कृत्स्नंतीर्थं पपौ ॥४॥ स च श्रीशैलपूर्णा
र्यः कलिवैरिदिव्यसूरिश्रीसूक्तानुसंधानं कुर्वंस्तत्र प्रतिपाद्यभगवद्गुणगणानुभवनिर्मग्नहृद
यो व्याधरूपिणो भगवतःकिंचिदपि कृत्यमजानन्नेव किंचिद्दूरं गत्वा ततस्तीर्थरक्षणेन शनैःश
नैर्लघुभवंतं तीर्थकुंभमपगततीर्थमवच्छिन्नं किमिदमिति पृष्ठतोमुखमावलम्ब्य तीर्थधारां पिबंतं
व्याधमालोकयन्रेरे व्याध मंदभाग्यभगवदर्थंनीयमाने तीर्थेकिमर्थमेतं द्रोहमकार्षीरिति तं ग
र्हयन्हेतात मा त्वं विचारं कृथा इह संनिधौ दिव्यं तीर्थं दर्शयामि ततो भगवदर्थं तीर्थं नयेति व
दता तेन व्याधेन पूर्वं गच्छता संदर्शितसरणिराकाशगंगातीर्थं प्रापितस्तदानीं तत्प्रदेशे तीर्थे
अनुपलभ्यमाने ततस्तस्मिन्व्याधे निजधनुर्मुक्तेन केनचित्तृणेन शरायमाणेन तत्रत्यं किंचन
शैलशृंगंविध्वा तत्र लग्नं शरमाकृष्य तदनु प्रपातिनीमतिवेगेनसंपततीमच्छाच्छधारां गग
नगंगानदीं प्रदर्श्य हे तात वियद्गंगानदी ह्येषा भगवत्प्रियतमा चेयमितः प्रभृति तयैव मह्यं

तीर्थमनुदिनमानयेति निजमीश्वरत्वं ज्ञापयित्वांतर्हिते तदितरमाश्चर्यमालोक्य अहो भगवतः श्रीवेंकटनाथस्याश्रितजनविषये प्रत्यद्भुतोऽयं लीलारस इत्यनुसंदधान स्ततस्तस्यां गगनगंगानद्यां कुंभे तीर्थमापूर्य यथापूर्वं तीर्थकुंभमानीय श्रीवेंकटनाथदिव्यालये भगवत्संनिधौ निदधौ॥५॥ततः श्रीवेंकटनाथोप्यर्चकमाविष्टस्तन्मुखेन भोःश्रीशैलपूर्णार्य भवदानीतपावनभोग्यतमदिव्यतीर्थेन मध्येमार्गमेव मम तृषाशांतिः संजातेति वदञ्छ्रीशैलपूर्णायमानंदयन्नेतदीयमभिषेकतीर्थानयनकैंकर्यं स्वस्य निरतिशयप्रीतिकरमिति सर्वस्मै लोकाय सम्यगावेदयामास ॥ ॥६॥ ततः श्रीशैलपूर्णार्योऽप्यनेनाभिषेकतीर्थानयनकैंकर्येण संजातनिरतिशयप्रीतेः श्रीवेंकटनाथस्य स्वस्मिन्संजातं निरतिशयकृपाशीतलकटाक्षपातमनुसंदधानो धन्यधन्यमात्मानंमन्यमानः ततः प्रभृति तस्मिन्नेव कैंकर्ये भृशमभिनिविष्ट आकाशगंगातीर्थादेव नित्यं भगवदभिषेकतीर्थमानीय समर्पयन्भगवंतं संतोषयन्नवात्सीत् ॥ ७ ॥ अयं किलपरमसत्त्वशमदमाद्यात्मगुणपरिपूर्णः श्रीशैलपूर्णः स्वानुरूपरूपगुणशालिनः स्वाभिमानकुमारस्य कुमारश्रीशैलपूर्ण इति नामोदयादनन्तरं महाश्रीशैलपूर्ण श्रीयामुनमुनिनियमनेन श्रीवेंकटाद्रिमागत्य निरंतरवासं कृत्वा भगवत्कैंकर्यैतत्परायणतया वर्तमानो

व्याधरूपेण भगवता तातेत्यामंत्रणेन श्रीशैलनाथतातगुरुरिति च प्रसिद्धनामधेयो बभूव
॥ ८ ॥ इत्थं भगवदभिषेकतीर्थानयनकैंकर्यैकपरायणस्य तत एव निरतिशयभगव
त्प्रीतिभाजनीभूतस्य परमभागवतोत्तमस्य श्रीशैलपूर्णार्यस्य दिव्यचरणप्रवणहृदयैरार्यैः
प्रणिसंधीयमानं तदीयकैंकर्यं ततः प्रीतभगवन्निरतिशयानुग्रहकार्याद्यभिव्यंजकाः श्लोकाः॥
तातेति संबोध्य यमंजनाद्रावानीयमानाज्जलपूर्णकुंभात् ॥ पपौजलं सादरमंबुजाक्षः श्रीशै
लपूर्णायनमोस्तु तस्मै॥१॥कृच्छ्रात्पापविनाशपूरितपयः कुंभं दधानं शिरस्यायांतं शबराकृतिः
पथिहरिःश्रीशैलपूर्णगुरुम्॥ तातेत्यर्थितवानदत्तउदकेपीतंशराघाततःकुंभंछिद्रयतातदातदुद
कंश्रीनायकेनामुना ॥ २ ॥ खिन्नेश्रीशैलपूर्णेत्वथपयसिहृतेतद्विषादान्निषादाकारः कारुण्यत
स्तंकरतलमवलंब्यानयन्नंजनाद्रौ॥बाणेनोद्राव्यगंगांगगनसुरनदी वेंकटेशप्रियेयंतत्तोयं मेप्र
दद्याअनिशमितिवदन्नंततोभूददृश्यःइत्येवंरूपा इतितद्विषयशिष्यैर्नित्यानुसंधेयआचार्यमंत्र
तःपितामहस्यापिपितामहाय प्राचेतसादेशफलप्रदाय॥ श्रीभाष्यकारोत्तमदेशिकायश्रीशैल
पूर्णायनमोनमस्ते ॥ इत्येवंरूपयतितदीयंदिव्यअवतारनक्षत्रंमेषमासस्वातीतिश्रीमल्लक्ष्मण
योगेंद्रश्रीरामायणदेशिकंवंदेश्रीशैलपूर्णार्यंमेषेस्वातिसमुद्भवं इति तद्विषयं तदीयपद्यमिति

चेहानुसंधेयम् ॥ ९ ॥ अस्य श्रीशैलपूर्णस्य रामानुजाख्ये स्वकुमारे विपन्ने ततः स्वानुरूपगुण
शाली ततएव हेतोः कुमारश्रीशैलपूर्ण इति नाम्ना विख्यातो मित्रतातापरनामधेयो निखिलवे
दांतार्थवेत्ता कश्चिदाभिमानिकस्वीकृततनय आसीत् ॥ १० ॥ निरतिशयश्रीभगवद्भक्तिशा
लिनिस्वानुरूपसकलात्मगुणशालिनि तस्मिंस्तनये परमप्रेम्णा सर्वदा तातेत्येव तदामंत्रणा
तात इति संज्ञाया निखिलवेदांततत्त्ववेदिनो अस्य कदाचिद्वादिविजयकाले मित्रतया परिग्र
ह्यतायाःश्रीवेंकटनाथेन श्रीभाष्यकारं प्रति स्वप्नेभिधानात्ततो भाष्यकारेणापि सर्वलोकोप
कारकमायावादिविजयानुकूलतया भगवतानिर्दिष्टस्यास्य श्रीशैलपूर्णतनयस्य सर्वलोकमि
त्रतयैव ख्यापितत्वान्मित्रसंज्ञायाश्च द्वयोःसमावेशेन मित्रतातार्यसंज्ञाह्यस्य सुप्रथिता संबभू
व ॥ ११ ॥ एतद्विषयानपि श्लोकानिमाञ्जगुरार्याः ॥ श्रीमतभाष्यकृतो ह्यभेदकथनैर्वादे प
णे प्रस्तुते साम्यैक्यः श्रुतिभेदवाक्यहृदयान्युक्त्वानिशीथेहरिः ॥ मित्रं भाष्यकृते जगादयमयं
सर्वस्य मित्रं जगौ तंश्रीभूधरपूर्णपुत्रमवरंश्रीशैलपूर्णं भजे ॥ १ ॥ भारद्वाजकुलाब्धींदुंप्रज्ञाभ
क्त्यमृतार्णवम् ॥ श्रीशैलपूर्णतनयं मित्रतातगुरुं भजे ॥ २ ॥ श्रीमद्वेंकटनायकस्य शबराका
रस्य वाक्यात्परं तातेत्याह्वयतो हि यस्य महिमा लोकेप्रसिद्धिं गतः ॥ तत्तातस्य च तातभूतम

वरं श्रीशैलपूर्णं गुरुं भारद्वाजकुलीनमाश्रितनिधिं प्रज्ञानिधिं संश्रय इति ॥ १२ ॥ इत्थंभूत सुप्रथितगुणगणशालिना मित्रतातापरनाम्ना स्वतनयेन कुमारश्रीशैलपूर्णेन सह महाश्रीशैलपूर्णार्यस्वाचार्यभूतश्रीयामुनमुनिनियमितं भगवदभिषेकतीर्थानयनकैंकर्यं सादरं कुर्वन् किंचित्कालानंतरं तत्तत्तनयपुरःसरमेव परमं पदं भेजे ॥ १३ ॥ स च श्रीशैलपूर्णार्यः परमपदं जिगमिषुः स्वाराध्यं भगवंतं नवनीतहस्तं श्रीकृष्णं समुद्घाटितालयद्वारकवाटमपसारिततिरस्करिणीकं च कारयित्वा स्वात्मानं तस्यसन्मुखं सन्निधाप्य बद्धांजलिश्छायया सह मणिवर्णममुंचमहमितस्तव चंचुपुटांतर्मधुरहविरर्पयितारं गवेषयस्वेति श्रीपरांकुशदिव्यसूरिश्रीमुखसूक्ताख्यद्राविडब्रह्मसंहिताप्रथमकांडचतुर्थश्रीमुखसूक्ताष्टमगाथोत्तरार्थमनुसंदधानो भगवन्नितःपरं भवतो बिंबाधरे दिव्यवक्त्रारविंदे श्लाघ्यहविःसमर्पयितारं गवेषयस्वगवेषयस्वेतिकथनयोग्यदशापन्नोहं गच्छामीति विज्ञाप्य भगवंतं श्रीवेंकटनाथं ध्यायन् भगवन्नद्य यावदाचार्यनियमनानुरोधेन भवदभिषेकतीर्थानयनकैंकर्यं यथाशक्त्यकार्षं यतः परं तादृशकैंकर्यकर्तारं गवेषयस्व भवदीयपरमकृपाकटाक्षेण भवदीयदिव्यविभूतिंगंतुमभ्यनुजानीहि दासमिति प्रार्थयन् सर्वांश्च भगवत्परिवारान् भागवतांश्च क्षामयन्द्वयानुसंधानैकपरायणस्वाचार्यदिव्यच

रणारविंदद्वंद्वंच परमपदप्रासादार्चिरादिमार्गपरमनिश्रेणिसोपानपंक्तिसमारोहणप्रधानप
रिकरभूतमनुसंदधानो नित्यविभूतिमवजगाहे ॥ १४ ॥ इत्थंश्रीशैलपूर्णावतारसमाध्ययनंतरं
तदीयचरणारविंदद्वंद्वं निरतिशयप्रेमशाली भगवान् रामानुजमुनिः श्रीशैलपूर्णार्यकृतभगवद
र्थतीर्थानयनकैंकर्यस्य भगवतो निरतिशयप्रीतिनिदानभूततया तन्मूलतयैव भगवता तास्मि
न् निरतिशयानुग्रहकरणेन च तत्प्रत्यभिज्ञाकरः कश्चिद्भगवतउत्सवः कर्तव्यः स च श्रीशैलपू
र्णार्ये भगवता विशेषानुग्रहकरणदिवसस्याध्ययनोत्सवसमाप्तिसमनंतरदिवसत्वात्तादृशे दिव
से कर्तव्य इत्यनुशशास सर्वान् भगवतः परिवारान् ॥ १५ ॥ ततः स्थलवासिनः सर्वेप्या
र्या भगवत्परिवाराश्च श्रीवेंकटनाथाध्ययनोत्सवसमनंतरदिवसे पुरा व्याधरूपेण भग
वताऽभिषेकतीर्थमानयंतं श्रीशैलपूर्णार्यं मध्येमार्गमभिगम्य कृतं तदीयकुंभतीर्थपानं सर्वे
पि प्रत्यभिजानंतः समुज्जीव्येयुरित्यनुसंदधानाः श्रीरामानुजमुनिं पुरस्कुर्वाणा भगवंतं
श्रीनिवासं मंगलगिरिसमारूढं सपरिवारं नयंत आकाशगंगातीर्थमार्गे किंचिद्दूरं गत्वा
गगनगंगातीर्थाद्दिव्यतीर्थपरिपूर्णान् कुंभानानयतः कांश्चन श्रीवैष्णवा अनभिगम्य महा
श्रीसूक्ताख्यकलिवैरिदिव्यसूरिद्राविडसंहितामुपक्रम्यानुसंदधाना नगरीमागम्य चतसृषु

वीथीषु समंतत आव्रजंतस्तत्रतत्र श्रीवैष्णवैः स्वस्वगृहपुरोंगणेषु पाद्यगंधपुष्पधूपदीपसदक्षिणतांबूलप्रदानैः सत्क्रियमाणा भगवन्मंदिरं प्रविश्य श्रीपुरुषसूक्तानुसंधानं कुर्वाणास्तदा समानीतगगनगंगातीर्थकुंभेषु कतिपयकुंभैर्भगवतः श्रीनिवासस्य निरंतरकुसुमपटलघुमघुमितौ दिव्यचरणौ श्रीशठकोपं चाभिषिच्य गंधपुष्पधूपदीपादिभिरुपचारैरभ्यर्च्य तदितरकुंभतीर्थानि सकलपरिमलघुमघुमितानि पानीयतीर्थतया भगवते श्रीनिवासाय निवेदयामासुः ॥ १६ ॥ ततः प्रभृति श्रीमदध्ययनोत्सवसमनंतरदिवसे शीतलतीर्थामृताभिगमयात्रोत्सवसंज्ञितोऽयमुत्सवः प्रतिसंवत्सरमनुष्ठीयते ॥ १७ ॥ अथ श्रीशैलानंतार्यवृत्तांत उच्यते ॥ १८ ॥ अयं किलानंतार्यः श्रीमद्भगवद्रामानुजमुनिरूपेणावतीर्णेन फणिराजेन भगवताऽनंतेन सकलशास्त्रार्थप्रवचनैकपरायणेन परमशास्त्रार्थानुपदेशित इव स्वानुष्ठानमुखेनापि संबोध्य जगदुद्दिधीर्षुणा द्वयमेकेनाकारेण कर्त्तुमशक्यंमन्वानेन श्रीमति बदरिकाश्रमे नरनारायणवेषापन्नभगवद्वत्स्वयमपि द्वेधाबुभूषणा पश्चिमदेशे श्रीकावेरीतीरे लघुनूतनपुरे महिततरभरद्वजगोत्राद्वैष्णवकुलशिखामणेःकेशवाचार्यत्स्वांशेनैव चतुष्पंचाशदधिकशतोत्तरचतुःसहस्रीसंख्येषु ४१५४ कल्यब्देषु पंचसप्तत्यधिकनवशतीसंख्येषु शालिवाहन

शकाब्देषु ९७५ च गतेषु विजयसंवत्सरे मेषं गते पूषाणि चित्रानक्षत्रे प्रादुर्भावितःसंबभूव ॥
॥ १९ ॥ भगवद्रामानुजमुनिरूपिणः फणिराजस्य तदेतद्द्वितीयावताराविषयमपीमं श्लोकमनु
संदधत आर्याः कल्यब्देषु प्रयातेष्वथजलधिशरैर्द्व्यब्धिसंख्येषु चंद्रे चित्रारूढे च मेषं सवितरि
विजयाभिख्यवर्षे प्रविष्टे ॥ भारद्वाजान्वयेऽदोर्लघुनवनगरे केशवाचार्यवर्याच्छेषःस्वांशेनभूयो
प्यहहवसुमतीभागधेयाद्बभूवेति ॥ २० ॥ तदनु केशवाचार्येण फणिराजस्वप्नोन्नीतावताररर
हस्येन स्वावतारानुगुणेनासंतार्यइति नाम्ना संस्कृतः क्रमेण लंभितसर्वसंस्कारोध्यापिताखि
लानुशासनः शुक्लपक्षे चंद्र इव दिनेदिने तेजसाभिवर्धमानः श्रीरंगनगरमध्यासीनं श्रीरामानु
जमुनिरूपं फणिपतिं स्वांशिनं श्रीराममिव सौमित्रिर्भरतमिव च शत्रुघ्नः समाश्रयितुकामो
यज्ञेशादिभिः सह श्रीरंगनगरीं ययौ ॥ २१ ॥ ततश्च स भगवान् रामानुजमुनिस्ततः स्वल्प
कालात्पुरस्ताद्देवस्य विद्वदग्रेसर यज्ञमूर्तेर्वादे विजित्य श्रीवैष्णवीकृतस्य महाज्ञानाधिकस्य
परमभागवतोत्तमभावमापन्नस्य दयापालमन्नाथमुनिसंज्ञया स्वसंज्ञागर्भितया समलंकृत
स्य स्वसमानप्रतिष्ठालिलंभायिषया पृथक्स्थाने संस्थापितस्य सकाशादनंतार्यस्य सहागतै
र्यज्ञेशादिभिः सह भगवत्समाश्रयणं कारयामास ॥ २२ ॥ स च दयापालमुनिरनंतार्यादी

न् स्वसन्निधौ लब्धभगवत्समाश्रयणान् स्वात्मानमेवानुचरतः शिष्यभावापन्नान् स्वात्मानं च तेषामाचार्यभावापन्नं कारयंतं श्रीरामानुजमुनिमालोक्य भगवञ्छ्रीरामानुजमुने नाहमिम माचार्यपदभरं वोढुं शक्ष्यामि एताननंतार्यादीन् भगवानेव शिष्यान्गृण्हातु भो अनंतार्यादय आर्या भगवान् रामानुजमुनिः कलविंकग्रीवायां तालफलमिव मदीयग्रीवायामिदमाचार्यप दं बबंध न चाहमिममाचार्यपदभरं वोढुं शक्नोमि श्रीरामानुजमुनिचरणयुगलैकशरणा भवंतु भवंत इति श्रीरामानुजमुनिमनंतार्यादींश्च विज्ञापयन् भगवतो रामानुजमुनिरेव दिव्यचरण नलिनयोरेनां समर्पयामास ॥ २३ ॥ तदनु नारायणो नरेणेव स भगवान्रामानुजमुनिःस्वशि ष्यभावमापन्नेनानंतार्येण संगतोखिलशास्त्रार्थानां यथावदुपदेशमनुष्ठानं च यथामनोरथं नि र्वर्तयामास ॥ २४ ॥ इत्थमखिलशास्त्रार्थयथावदनुष्ठानपरायणस्यानंतार्यस्यापि सकाशे ब हवो भगवत्समाश्रयणमलभंत ॥ २५ ॥ अथ कदाचिच्छ्रीमुखसूक्ताख्यश्रीपरांकुशदिव्यसू रिद्राविडब्रह्मसंहिताप्रवचनैकपरायणश्रीरामानुजमुनिस्तृतीयकांडतृतीयश्रीमुखसूक्तद्वितीय गाथाप्रवचनसमये निजदिव्यगोष्ठ्यां विराजमान् सर्वानार्यानान् संबोध्य भोआर्याः अस्मत्ताततातततातततातस्यापि प्रथमस्तातः देवैर्देवाधिपेन सह विकीर्यमाणानां पुष्पाणा

मुल्लासाकरे श्रीवेंकटे अनंतगुणप्रथश्यामसुंदरस्वामीतिद्वितीयस्यामस्यांगाथायां परमप
दवासिभिर्नित्यसूरिभिरपि निखिलनित्यसूरिपरिषन्निर्वाहकेण श्रीमताविष्वक्सेनेन सहेह
भगवत्समाराधनार्थं दिव्यपुष्पपाणिभिः समागतैरत्रत्यभगवन्निरवधिकसौशील्यदिव्यक
ल्याणगुणानुभवसंजातहर्षप्रकर्षप्रशिथिलपाणिभिरवसंकीर्यमाणानां दिव्यपुष्पाणामपि म
होल्लासाकरेऽस्मिन् श्रीवेंकटाचले परमपदेऽप्यलब्धामनंतां गुणप्रथां भजमानो नीलमेघश्याम
लदिव्यविग्रहवर्णसौंदर्यशाली स्वाम्यनंतपर्वघटितायामस्मच्छेषिपरंपरायां प्रथमः खल्विति
प्रतिपादयता श्रीपरांकुशदिव्यसूरिणा परमपदवासिभिरप्यत्रागत्य कैंकर्यकरणादयं श्रीवेंक
टाद्रिर्निरतिशयभगवन्मुखोल्लासहेतुकैंकर्यस्थानामिति दिव्यपुष्पपाणयः सूरयः समागता
इत्युक्त्या पुष्पकैंकर्यमस्य वेंकटनाथस्य निरतिशयप्रियमिति कीर्यमाणानामपि पुष्पाणा
मुल्लासहेतुरयं गिरिरित्य भिधानेन निरतिशयपुष्पसमृद्धिहेतुरयं गिरिरित्यनवधिकसौशी
ल्यगुणप्रथो दिव्यसौंदर्यशालिप्राप्तस्वामिपरात्परशेषी चायं वेंकटनाथ इत्यभिधानेनावश्य
माराधनीयोऽयमिति च प्रतिपादनात्त्वयं वेंकटनाथोऽवश्यं पुष्पकैंकर्येणाराधनीय इति हि सि
ध्यति तदिह प्रथितपुष्पमंडपाभिधाने श्रीवेंकटाद्रौ श्रीमतो वेंकटनाथस्य मुखोल्लासाय किं

चन नंदनवनं विधायानुदीनमतिसुरभिकुसुमतुलसिकामालासमर्पणकैंकर्यकारिकोनुवास्या दस्यां गोष्ठ्यामिति सर्वानार्यान् पप्रच्छ ॥ २६ ॥ इत्थं श्रीरामानुजमुनिना पृष्टायामार्यगोष्ठ्यां श्रीवेंकटाचलसीतभीत्या निरुत्तरायामनंतार्यः अहो भगवद्दासेनेदृशशीतभीत्यैव वा कंपितव्यं परलोकहानिभीत्या निरवधिककल्याणगुणगणाधिकाचार्यशासनभंगभीत्या च किंकिंचिदपि न कंपितव्यं इदमेव वा समुपचितं शिष्यलक्षणं सुसंदरमिदं यदाज्ञापयत्याचार्यस्तदेव हि निश्रेयसार्थिनः शिष्यस्य श्रेय आचार्यशासनातिलंघिनः किं नु वा शिष्यत्वं नामतस्मादाचार्येणानुशिष्यमाणस्यपरमदुष्करस्याप्यस्य श्रीवेंकटनाथकैंकर्यस्यांगीकार एव स्वरूपानुगुणः परमनिःश्रेयसकरश्चेत्यनुसंदधानः सद्यः समुत्थाय बद्धांजलिर्भगवन् स्वामिन्नेषोहं भगवतो वेंकटनाथस्यपुष्पकैंकर्याय सज्जोस्मि मां नियुंक्ष्वेति स्वावतारप्रयोजनभूतां कैंकर्यनिष्ठां संप्रार्थयामास ॥ २७ ॥ इत्थमभ्यर्थयंतमनंतार्यमालोक्य श्रीरामानुजमुनिर्भृशंसंतुष्टः सन्भो अनंतार्यत्वं खल्वस्यां गोष्ठ्यां पुरुषोसि पुष्कलात्मगुणोपेतस्याऽऽचार्यस्याशासनभंगमसहमानस्य तवैव खल्वाचार्यपुरुषपदमर्हमिति तं संभाव्य सहैव सकलया गोष्ठ्या सद्यः समुत्थाय ससंभ्रममालिंग्य पुरुषशब्दबिरुदपारितोषिकदानसत्कृतमेनमनंतार्यं श्रीवेंकटाच

लं प्रति प्रस्थापयामास ॥ २८ ॥ तदनु समंततो विख्यातानंतपुरुषाचार्याभिधानोऽनंतार्यः सदारःश्रीवेंकटाद्रिमुपगम्य भगवंतमनुदिनमभिवंदमानः तत्र विपुलतमं नंदनवनं तदाधारमहातटाकं नंदनवनमध्ये कांचनवापीं च विधाय सर्वेषामपि श्रीरामानुजसंज्ञां विधाय श्रीरामानुजशासनानुगुणं पुष्पकैंकर्यैकपरायणोऽभूत् ॥ २९ ॥ एवं तस्मिन् श्रीरामानुजमहातटाके मध्यतटभागे सलिलनिर्गममार्गमेकं श्रीरामानुजारामे फलपुष्पतरुगुल्मलताद्यालवालेषु श्रीरामानुजवापिकायां च तदा तदा सेचनप्रचारणस्थापनप्रपूरणाद्यर्थसलिलानयनानुकूलमनंतार्यो निरमासीत् ॥ एवं भगवद्दिव्यालये सगोपुरं प्राकारं तदंतःपुष्पवापिकासमीपे भगवद्रामानुजमुनिशासनेन तदीयपरमाचार्यभूता श्रीयामुनामुनिसंज्ञाचिन्हितं श्रीयामुनमुन्यर्चाविग्रहसमेतं पुष्पमालाकरमंडपं चानंतार्यो निरमासीत् ॥ ३० ॥ श्रीयामुनमुनिः प्रागिह किंचित्कालं स्थित्वा तत्स्थाने कुटीरं कृत्वा तस्मिन् पुष्पमालाजालं निबध्य भगवते श्रीनिवासाय समर्पयन्नासीदिति वृद्धजनसंकथितां कथामाकर्णयता भगवता भाष्यकारेण श्रीयामुनमुनिनाम्नापुष्पमालाकरमंडपं निबध्य तत्र श्रीयामुनमुनिमर्चारूपिणमवतार्य प्रतिष्ठाप्य समाराधनमपि निर्वर्तनीयमिति नियमनात् स्वाचार्यसंज्ञामपि विधायानंतार्यो यथाचा

र्यानुशासनं सर्वं निरवर्तयत् ॥ ३१ ॥ अनन्तार्योऽपि स्वयं तस्मिन्नेव मण्डपे श्रीरामानुजनन्दनवनात्पुष्पाण्यानीय स्थापयित्वा तत्रैव माल्यानि निबध्य पश्चान्मालाजालपूरितं कण्डोलं गन्धग्रहणजापचारपरिहाराय शाटिकानिबद्धमुखनासिकः परमादरेण मस्तके बिभ्राणस्सहच्छत्रचामरादिपरिच्छदस्सहमङ्गलवाद्यः करदीपिकापुरस्सरो यामुनमण्डपान्निर्गत्य मन्दिरं प्रदक्षिणीकुर्वन् भगवदाराधनसमये भगवत्सन्निधिं प्रति प्रतिदिनं नयन् भगवन्तमुपासीन आसीत् ॥ ३२ ॥ अनन्तार्येण हि परमादरेण परिपूर्णगर्भया देव्या कुमारेण च सह श्रीरामानुजतटाकं खनता मृद्भारे देव्या वाह्यमाने परमकारुणिको भगवान् पूर्णगर्भामनन्तार्यदेवीं मृद्भारमुद्वहन्तीं द्रष्टुमशक्नुवन् बटुरूपी सन्निधाय स्वयं तद्भारं वोढुमुद्युक्तः स्वकैङ्कर्ये परसम्बन्धमसहमानेन तेन निरुद्धोऽपि तद्देव्यां करुणातिशयेन मध्येमार्गं पुनःपुनरागत्य देवीहस्तान्मृद्भारकण्डोलं बलाद्गृहीत्वा बभार॥३३॥ततश्च विज्ञातवृत्तान्तोऽनन्तार्यो बटुरूपिणं भगवन्तमनुधावन् खनित्रेण चुबुके प्राहार्षीत् ॥ ३४ ॥ तदन्वनन्तार्येण गुरुखनित्रेण ताडितचुबुको बटुरूपी भगवान् चुबुकगलद्रुधिरधारो धावन्निजमानन्दनिलयविमानमवजगाहे ॥३५॥ ततश्चानन्तार्यो मन्दिरान्तर्गत्वा भगवन्तं चुबुकगलद्रुधिरधारं दृष्ट्वा कृतमहापचारमात्मानम्म

न्यमानः क्षामयन् भगवन्तमुपतिष्ठमानश्चुबुकव्रणे रुधिरधाराशमनाय पुष्पधूलिं प्राक्षिपत् ॥ ३६ ॥ ततो भगवान् श्रीनिवासोऽनन्तार्यकैङ्कर्यश्रद्धाभूम्ना सन्तुष्टस्तं सान्त्वयन् तद्व्रणचिह्नं श्रीवत्सचिह्नमिव भावयन् सर्वेषां तदीयमहिमप्रकाशनाय चुबुकव्रणस्थाने सर्वदा सुगन्धि घनसारचूर्णं धारयन् तदीयखनित्रमपि तदीयवैभवस्थापनाय सर्वलोकसंदर्शनयोग्यस्थले स्थापयन् वस्त्रभूषणमाल्यादिभिस्तञ्च सभाजयामास ॥ ३७ ॥ कदाचिदनन्तार्यविरचिते श्रीरामानुजारामे चिरं स्वैरविहारं कुर्वाणौ राजदम्पतिवेषभूषितौ श्रीपद्मावतीश्रीनिवासौ कस्यांचिद्रात्र्यां कुत्राचिन्निकुञ्जे निलीनोऽनन्तार्यः प्रगृह्य क्वचित्तरौ लतापाशेन बद्धुमाकर्षन् श्रीवेङ्कटनाथे कथञ्चिद्धस्तौ विमोच्य पलायिते पद्मावतीदेवीं पलायितुमशक्नुवन्तीं भोस्तात तात तवाहं पुत्री भवामि स्त्रियमनपराधिनीम्मामुञ्चेति करुणं वदन्तीं चम्पकवृक्षे क्वचन लतापाशेन निबध्य भर्त्सयंस्तदीयवृत्तान्तं च पृच्छन् पार्श्वत एवावतिष्ठमानः प्रातर्भगवन्मन्दिरमागतैरर्चकपरिचारकैर्भगवद्वक्षोनिलयकण्ठिकालयपद्मावतीमनुपलभमानैर्भगवता कञ्चन पुरुषमाविष्टेन ज्ञापितवृत्तान्तैर्भगवदाज्ञया पद्मावतीमनन्तार्यञ्चानेतुमागतैर्विदितवृत्तान्तस्सद्यो महापचारम्मन्वानस्सन् देवीं पद्मावतीं चम्पकतरुबन्धनाद्विमोच्य क्षामयित्वा

कृतनित्यकृत्यः प्रागुक्तनिजवाक्यसत्यताचिकीर्षया परिणययोग्यकन्यादशामापद्य पुत्रीभावं भजमानां पद्मावतीदेवीं सपुष्पपिटकं कक्षे दधानो भगवन्तमुपसद्य वन्दमानः क्षामयन् काञ्चनमालां निजकण्ठादुद्धृत्यात्मनः कण्ठे निक्षिप्य सभाजयते त्वदीयामिमां कन्याम्मह्यं देहीति चाभ्यर्थयते श्रीनिवासाय देवीं समर्पयन् समर्प्यमाणां च देवीं सर्वेष्वर्चकपरिचारकेषु संपश्यत्सु सद्यस्समुत्प्लुत्य यथापुरं काण्ठिकालयकनकमयपद्मावतीरूपिणीमेव सम्भूतां साश्चर्यं सह सर्वैस्संपश्यन् -- ततः प्रभृति -- पद्मावतीदेवीतात इति श्रीवेङ्कटनाथश्वशुर इति च समन्ततस्सर्वैस्सङ्गीयमानः-- तदातदा श्रीवेङ्कटनाथदर्शनकालेषु -- मच्छ्रीपुत्रीयुक्तवक्षस्थलेति प्रब्रूते मत्प्राणभूतेति चापि॥ त्वद्दंष्ट्राग्रेणाण्डभित्तेर्विभिद्य प्रोन्नीताया भूमिदेव्याः प्रियेति॥ प्राक् सप्ताशन्युग्रघोषान्महोक्षान् जित्वात्ताया गोपपुत्र्याः प्रियेति॥मत्कन्याश्रीरङ्गभूनित्यवासिन्नाहंजानाम्यार्तिसीमानमस्याः॥ इत्येवमर्थां श्रीमुखसूक्ताख्यद्राविडब्रह्मसंहितासप्तमकाण्डद्वितीयश्रीमुखसूक्तनवमगाथाम् एकाकन्येत्यादिषु कन्याशब्दितम्मनः कन्यास्थाने स्वात्मानं मातृस्थाने श्रीवेंकटाद्रीशं श्रीरंगेशस्थाने च भावयित्वा मच्छ्रीपुत्रीशब्दवाच्यतया स्वपुत्रीभावापन्नपद्मावतीञ्चानुसन्धाय स्वयं श्रीवेंकटनाथविषयामनुसन्दधानस्तदनन्तरजा

तां स्वपुत्रीं यथोक्तवृत्तान्तविशेषप्रत्यभिज्ञापिकया मच्छ्रीपुत्रीसंज्ञया संज्ञावतीमकार्षीत्॥३८
कदाचिदनन्तार्यः श्रीरामानुजारामे तुलसीकुसुमापचयं कुर्वन् करे केनचिद्भोगिनादष्टोभो
गिदष्टं करं श्रीरामानुजचरणावेव शरणमित्यनुसन्दधानः सद्यः कुसुमैरपमृजन् स्वामिपुष्क
रिण्यां स्नातस्सन् विषनिर्हरणसोत्कण्ठानन्तेवासिनो निवर्त्य भगवन्तमुपतिष्ठमानः भगव
ता श्रीनिवासेन किमिति विषनिर्हरणप्रयत्नादुपरतोऽसीति पृच्छमानः स्वावतारबीजं फणि
राजांशं स्वयमनुसन्दधानः यदि दंशनक्रियाकर्ता फणी बलवान् तदाहं विरजानदीमवगाह्य
विधूतकल्मषः श्रीवैकुण्ठनाथं परिचरेयम् यदि दंशनक्रियाकर्मीभूतः फणी बलवान् तदा पुन
रिहैव स्वामिपुष्करिणीमवगाहमानो भवन्तमेव परिचरेयम् उभयथापि न क्षतिरिति तूष्णी
मुपरतोऽस्मीति विज्ञाप्य सुखमवतस्थे ॥ ३९ ॥ कदाचिद्यामुनमण्डपे बहुलकुसुममालिकागु
म्भनैकपरायणोऽनन्तार्यस्तदीयाध्यवसायं परीचिक्षिषुणा भगवतार्चकमुखेन तदाह्वानाय
चोदितेन दूतेन समाहूतस्तदा नागतः कुसुममालिकागुम्भनकार्यं निर्वर्त्य मालासम्भृत
कण्डोलशिरस्क एवागतः भगवता मदाह्वानसमय एव कुतो नागतोसि मदाज्ञातिलङ्घिनं
त्वामितो निष्कासयामि चेत्किं करिष्यसीति पृष्टः भगवन् वेङ्कटनाथ किन्ते छिन्नम् मम तु

मालतीकुसुममुकुलानि विदलद्दलानि पश्चादशक्यगुम्भनानि विशीर्णगन्धीनि च भविष्यन्ति ततो न तदैवागन्तुमवसरोऽभूत् न चाचार्यनियमितकैङ्कर्यमपि वा परित्यज्य तदितरत्वदीयकैङ्कर्यं कर्तव्यमिति कश्चिदस्ति निर्बन्धः परेणागत्याधिष्ठितः श्रीवेंकटमहाचल इति श्रीमुखसूक्ताख्यद्राविडब्रह्मसंहितातृतीयकाण्डतृतीयश्रीमुखसूक्ताष्टमगाथायां प्रतिपादयता तत्त्वदर्शिशिखामणिना श्रीपराङ्कुशदिव्यसूरिणा अत्र विराजमाने श्रीवेंकटाचले मध्ये समागत्य त्वयाधिष्ठानं कृतमित्यभिधानेन तव मम च साधारणेऽस्मिन् श्रीवेंकटाद्रौ वारदिवसप्रागागमनमात्रेण कथमस्मान्मां त्वं निष्कासयितुमर्हसि किम्माम्मधुरकविदिव्यसूरिकल्पमधीत्य तदीयनिष्ठामनुतिष्ठन्तमाचार्यैकशरणं ततो मधुरकविदासभावमापन्नं च न जानासीति प्रतिवदन् तादृशं तदीयमाचार्यनिष्ठादार्ढ्यमालोक्य तुष्टेन भगवता किन्तेऽपेक्षितम् तवाचार्यनिष्ठया भृशमहं तुष्टोऽस्मि मोक्षस्तु श्रीरामानुजमुनिचरणैकशरणस्य तव करगत एव वर्तते न स ते मया देयः अपरं किं नु वा कांक्षस्वेति पृष्टो धन्यधन्यमात्मानम्मन्यमानः भवत्कैङ्कर्यमन्तरेण किम्मेऽपेक्षितं वर्तते इहामुत्र च तदेवाविच्छिन्नं मे वर्धयस्वेति प्रार्थयन् तदीयानिष्कामतां वीक्ष्य नितरां तुष्टेन भगवता त्वत्सम्बन्धिसम्बन्धिनाम्मानुषाणाममानुषाणांचाह

म्मोक्षं दास्यामीति वैशेषिकवरलक्षणपारितोषिकदानेन परितोषितः मधुरकविनिष्ठां भजमानस्य ममेदृशभगवदनुग्रहलाभेनेतः प्रभृति मदीयानां मधुरकविदासइत्येव दास्यनाम भवत्विति व्यवस्थां कुर्वन् ततः प्रभृति विशेषतस्सर्वैस्समाश्रीयमाणआसीत् ॥ ४० ॥ कदाचिदनन्तार्येण प्राकारे सगोपुरे निबध्यमाने तत्पार्श्वे सञ्जातस्य समन्ततः प्रसृतबहुलशाखस्य कस्यचिच्चम्पकभूरुहस्य प्राकारप्रणयनविरोधिनश्छेदनप्रसङ्गे श्रीवेंकटनाम्न्यस्मत्स्वामिनो महनीयाचले यः कश्चिदपि वा जायेयेति श्रीकुलशेखरदिव्यसूरिसंहिताचतुर्थश्रीसूक्तदशमगाथायामभिहितरीत्या कोनुवा दिव्यसूरिरित्थम्भूतो जातो भवेत् एतदचलवर्तिनःस्थावरजङ्गमास्सर्वेऽप्यप्राकृतप्राणिन इति हि पुराणेऽप्यभिधीयते तस्मान्नैष छेत्तुमर्ह इत्यनुसंदधानेन तद्दिनरात्रौ भगवन्तं ध्यात्वा तरुरूपिणं नित्यसूरिं च भगवन् भगवद्धप्रमार्गात्किञ्चिदपेहीति प्रार्थयता सुप्तेन प्रातः प्रबुद्धेन तं चम्पकवृक्षं भगवद्धप्रमार्गादपेतमालोकयता च तेन यथावदेव प्राकारो निर्मापितोऽभूत् ॥ ४१ ॥ ततो हेतोरयं चम्पकप्राकार इति सुप्रसिद्धोऽभूत् ॥ ४२ ॥

कदाचिच्छ्रीवेङ्कटनाथमभिवन्दितुं श्रीरङ्गनगरादागतेषु वात्स्यवरदार्यप्रभृतिषु श्रीवेङ्कटशैलमधिरोहत्सु केषुचिच्छ्रीवैष्णवेषु गिरिसोपानपरम्परारोहणपरिश्रान्तेषु क्षुत्पिपासातुरेषु

॥ ११ ॥

परमकारुणिकः श्रीवेङ्कटनाथोऽवलम्बितश्रीवैष्णवबटुवेषश्चित्रान्नपात्रपाणिस्तेषामभिमुखमागम्य तेभ्य आनीतचित्रान्नं दातुं प्रवृत्तः अनधिकारिताशङ्कया तैस्तस्मात्तदन्नं ग्रहीतुं संदिहानैः भो बटो कस्त्वमसि कस्य वा शिष्योसि किन्नामासि कुत्रत्यमिदं चित्रान्नम् पद्यमङ्गुलिविच्छेद इत्यादिशास्त्रेण दासलक्षणतया चोदितम् शिष्यस्य नित्यानुसन्धेयमन्त्ररूपं त्वदाचार्यपद्यं च किंरूपम् तदेतत्सर्वं वदेति पृष्टः श्रीवैष्णवोस्मि श्रीशैलानन्तसूरेश्शिष्यो मधुरकविदासनामाहमस्मि केन चिदध्वनीनेन भवतां श्रान्तिमाकर्णयतानन्तार्येण भगवन्निवेदितमिदं चित्रान्नं युष्मदर्थं प्रेषितम् गृह्यतामुपभुज्यतां चेदमित्यभिधाय इदंच मम नित्यानुसन्धेयमन्त्ररूपमाचार्यपद्यामिति च वदन् ॥ अखिलात्मगुणावासमज्ञानतिमिरापहम् ॥ आश्रितानां सुशरणं वन्देऽनन्तार्यदेशिकं ॥ इति कञ्चनमन्त्रं सद्यो निर्माय पपाठ ॥४३॥ तदनु पुनरपि तैः श्रीवैष्णवैः भो बटो किमस्मिन्मन्त्रे तव परमाचार्यसम्बन्धस्त्वदाचार्यस्य विद्यमानतया प्रतिपादितो न दृश्यते किं भवता सम्प्रति कल्पितोऽसौ मन्त्र इति पृष्टस्स बटुः भोआर्याः अस्मदाचार्यविषयौ द्वौ मन्त्रौ तत्रैकस्सदाचार्यलक्षणगुणातिशयपरः अपरस्तु सदाचार्यसम्बन्धातिशयपरः तत्र प्रथमस्तु प्रागुक्तः द्वितीयमप्याकर्णयन्तु भवन्तइत्यभिधाय। श्रीमद्रामानु

जाचार्यश्रीपादांभोरुहद्वयं॥सदुत्तमांगसंधार्यमनंतार्यमहंभजेइति द्वितीयमपि कञ्चनमन्त्रंनि
र्माय पठन्नन्ततस्समाहित चित्तेषु तेषु तेषु श्रीवैष्णवेषु चित्रान्नं गृहीत्वा भोक्तुमुपक्रममाणेषु ते
भ्योऽनुज्ञां लब्ध्वाकिञ्चित्पुरस्तादेवाजगाम॥४४॥ ततस्ते श्रीवैष्णवास्तं भगवत्प्रसादं भुक्त्वा
गतश्रमाश्शनैश्शैलमारुह्यानन्तार्यमभिवन्दमानास्तेन च स्वागतं पृष्टाः भगवन् भवदन्तेवा
सिमधुरकविदासब्रह्मचारिहस्ते भवत्प्रेषितेन भगवत्प्रसादेन सुतृप्ता गताध्वश्रमास्सुखमा
गच्छाम इत्यवोचन्॥४५॥तदनु कोनुवा मधुरकविदासनामा मदंतेवासी ब्रह्मचार्यत्र वर्तते न
च भवतां भगवत्प्रसादोमया प्रेषितः। न च भवदागमनवृत्तान्तो मया ज्ञातः। सर्वमिदं भवता
मध्वश्रममसहमानस्य भगवतश्चेष्टितमित्यनन्तार्येणाभिहितास्ते वैष्णवा मध्येमार्गं तद्वृत्तचे
ष्टितं सर्वमपि व्यज्ञापयन्। तदनु तं वृत्तान्तमाकर्णयतो विस्मयमानस्यानन्तार्यस्य गोष्ठ्यां व
र्तमानास्सर्वेऽप्यार्या इदं सर्वमाकर्णयन्तो विस्मयमानमानसाः अहो वेंकटनाथः अनन्तार्यस्य
महासदाचार्यलक्षणगुणपौष्कल्यमाचार्यसम्बन्धभूयस्त्व च स्वयमेवाभिधाय तच्छिष्यभावं च
दधानः स्वस्यतस्मिन् निरतिशयाभिमानसद्भावमखिलजनानामवगमयति। स्वस्यतच्छिष्य
भावानुसंधानेकिं कारणमिति चेत् श्रीवेंकटनाथाय शंखचक्रप्रदातुर्भगवतो रामानुजमुनेस्तं

प्रत्याचार्यत्वात् शेषांशभूतस्यास्यानन्तार्यस्याप्यंशिभूतेन भगवद्रामानुजमुनिनैकवस्तुत्वात् । श्रीमद्रामानुजाचार्यश्रीपादांभोरुहद्वयमिति तदीयचरणारविंदरूपतामस्य ब्रुवाणेन भगवतैव तदंशरूपतायाः ख्याप्यमानत्वाच्च तदाचार्यत्वानुसन्धानपरीवाहरूपमत्रत्यमाचार्यत्वानुसंधानमेव तत्र मानं भवितुमर्हतीति निश्चिन्वानास्ततोऽनन्तार्ये विशेषप्रतिपत्तिं कुर्वाणाः।इतः प्रभृति भगवता श्रीवेंकटनाथेन परमादरेण निबद्धाविमावेव मन्त्रावनन्तार्यान्तेवासिभिराचार्यमंत्रतया समादरणीयाविति श्रीरामानुजमुनेर्दाशरथिकूरेशादिषु त्रिदंडपादुकाजलपवित्रादिरूपतावच्छ्रीवेंकटनाथवचनप्रामाण्येनानन्तार्ये चरणारविंदरूपतापि व्यवस्थिता सर्वैरनुसन्धेयेति च व्यवस्थामकार्षुः ॥ ४६ ॥ कदाचित् श्रीरंगनगरे श्रीभगवद्रामानुजमुनिमाश्रितेषु कुमाराः निद्रालुधनुर्दासः १ कुमारमहाबलिबाणाधिराजः २ अर्जुनग्रामपूर्णः ३ लघ्वार्यः ४ इत्येतेषुचतुर्ष्वार्तप्रपन्नेषु आर्तिप्रकर्षवशात् स्वप्राप्यप्राप्तये त्वरमाणेषु श्रीरामानुजमुनिनियमनानुरोधेन तत्रपूर्वेषु त्रिषु तत्रतत्र स्वस्वरुचित्वरापरिपाकानुगुणतत्तत्स्वस्वाप्राप्यलाभपरितृप्तेषु चतुर्थो लघ्वार्योऽपि सहसैव परमपदं कांक्षमाणः पानीयालाभे शुष्कजिव्हो म्रियमाणस्तृषार्त इव संसारमरुकान्तारे तापत्रयाभिभूतोहं सद्य एवापर्याप्तामृतालाभे

प्राणधारणं न लभ इति विज्ञापितेन श्रीरामानुजमुनिना भो लघ्वार्य तवाभिमतप्राप्यप्रदः
श्रीवेंकटनाथः खलु तत्र गत्वाऽनन्तार्यारचितसमुचितपुरुषकारेण भगवंतमुपसद्य पुरुषार्थं प्रा
प्नुहीतिप्रत्युक्तः श्रीवेंकटनाथे प्रावीण्यातिशयात्सद्य एव निर्गतः श्रीवेंकटाद्रिमासाद्यानन्तार्य
मभिवन्द्य स्वाभिप्रायं श्रीरामानुजमुनिदिव्याज्ञां च तस्मै विज्ञाप्य भगवन्ननन्तार्य त्वदीयपु
रुषकारेणैव श्रीवेंकटनाथो मां सद्यो रक्षितुमर्हतीति प्रार्थितेनानन्तार्येण अयं खलु लघ्वार्यः
परमार्तिसंपन्नः सकलकल्याणगुणशाली सदाचार्यपदमुख्याभिधेयः श्रीमान् रामानुजमुनिर
स्याचार्यो नियंता ।पुरुषार्थप्रदाता च श्रीवेंकटनाथःसर्वज्ञःसर्वशक्तस्समस्तकल्याणगुणगणम
होदधिः। अतोऽस्यापेक्षितपुरुषार्थस्सद्यस्सम्भवितुमर्हत्येव। न खलु सर्वज्ञे सर्वशक्ते परमपुरु
षे पुरुषार्थं प्रदातुमुद्युक्ते कश्चिदन्योस्ति निरोद्धा।नित्यानपायिनी चाखिलजगन्माता श्रीरस्यो
रःस्थलं क्षणमपि न जहाति। एवं स्थिते सद्यः पुरुषार्थासंभवाशंकाया नावकाशलेशः अतो म
त्तोयं व्याजमात्रतया पुरुषकारकृत्यं वाञ्छति।अनुशास्ति च मां पुरुषकारकृत्ये भगवान् रामा
नुजमुनिः। अतोऽवश्यमेवास्मिन् विषये पुरुषकारकृत्यमाचरणीयमित्यनुसन्दधता समाहित
चित्तेन ।भोलघ्वार्य एहि तर्हि भगवद्रामानुजदिव्याज्ञानुसारेण भगवन्तमुपगच्छावेत्यभिहित

स्तेन सहैव श्रीवेंकटनाथमुपासदत् ॥ ४८ ॥ तदन्वनन्तार्यलघ्वार्ययोर्द्वयोरपि भगवन्तं प्रणिपत्य मंदिरांतः प्रविश्य भगवत्संनिधौ स्थितयोः भगवानपि श्रीवेंकटनाथः करुणाशीतलकटाक्षसेचनपूर्वकं तीर्थश्रीशठकोपमाल्यशेषवस्त्रदिव्याङ्गरागादीन् प्रसाद्य तैरलंकृताङ्गौ तौ प्रसादस्वीकारानंतरमपि किंचित्कालं तिष्ठंतौ वीक्षमाणश्शंकितमना भोअनन्तार्य किं किंचिद्विज्ञापयितुकाम इव तिष्ठसि।यदि किंचिद्विज्ञापनीयमस्ति तर्हि तद्विज्ञाप्यतां माकृथाःशङ्कामिति चोदितेऽनन्तार्यै भोःस्वामिन्नयं लघ्वार्य आर्तप्रपन्नः सन् भगवता रामानुजमुनिना नियमितः परमपुरुषार्थमद्यैव त्वत्तो लब्धुमुपागतः तदद्य सद्य एवास्य पुरुषार्थं प्रदद्याः त्वं खलु परमकारुणिक आश्रितवात्सल्यैकजलधिस्सर्वशक्तिस्समस्तकल्याणगुणगणमहोदधिरसि किमधिकं विज्ञापनीयमस्तीति विज्ञापयति सति ततो लघ्वार्याय भोःपरमदिविषदां राष्ट्रभूतं परमव्योमपदं तुभ्यमहं दत्तवानस्मि स्वीकुरुष्वेति दिविषदां राष्ट्रमपि त्वं वीक्षस्वेति मोक्षमपि दद्यादिति दिव्यसूरिगाथोक्तप्रकारेण परमप्राप्यभूतं परमपदं प्रादात् ॥ ४९ ॥ ततो लघ्वार्यः श्रीवेंकटनाथमहोदारतां वीक्ष्य सन्तुष्टः । भोअनन्तार्य श्रीवेंकटनाथः स्वस्वरूपं विस्मृत्य मत्स्वरूपं पश्यति चेत् मह्यं दातुं पुराणानि नरकस्थानानि न पर्याप्तानि । अपूर्वाणि

महानरकस्थानानि बहूनि स्रष्टव्यान्येव मदीयानादिजन्मपरंपरानुष्ठितपापपरम्पराणामप
रिमितत्वात् । स्वतंत्रस्यापराधपरामर्शे दण्डनोद्यमस्यापरिहार्यत्वाच्च । मत्स्वरूपमपरामृश्य
स्वस्वरूपं परामृशति चेन्महोदारस्यास्य मह्यं प्रदातुमद्य विद्यमानं पुराणं परमपदमपि
न पर्याप्तं अपूर्वाण्यनेकानि परमपदानि स्रष्टव्यान्येव । दीर्घमहाहस्ततया तस्य दिव्यसूरिसू
क्तिसिद्धत्वात् । अन्यथा प्रार्थनापरिसमाप्तेः प्रागेवेत्थं । साध्वनः पारमाप्नोति तद्विष्णोःप
रमं पदम्॥इति सकलसंसाराध्वपरमपारभूतस्य परमदुर्लभस्य परमपदस्य सद्यःप्रदानं कथ
मिव घटत इत्यनंतार्यं विज्ञाप्य सद्य एव परमव्योम जगाम ॥ ५० ॥ ततोऽनन्तार्योपिपरम
विस्मयमापन्नः । हरिद्राचूर्णसंस्कारानाचरेत् ब्रह्मवित्पितुः । काले तु चरमे पुत्रैस्स्तुतिर्गेयाच
वैष्णवैः ॥ हारिद्रचूर्णैरंगानां गुरूणां च महात्मनां ॥ कालेऽन्तिमे परिष्कारं कुर्यान्मन्त्रपवित्रि
तैः । पुंसूक्तेनाभिषेकं च ब्रह्ममेधक्रियां चरेत् । अविलंबेन कालेन न पर्युष्टेन वै सुतः ॥ इति श्री
संहितावचनैः । अर्चिरादिगतेर्मार्गचिन्ताध्यायं शुभावहं । पठेयुरनघा विप्राश्चान्या ब्रह्मपरा
स्स्तुतीः॥मानुषीश्च ऋषिप्रोक्ताः पितॄणां शाव उत्सवे । उलूखले तु मुसलैः कायमाने मनोहरे।
स्थाप्य शुद्धां हरिद्रां वै दासीभिः केशवस्य च ॥ चूर्णीकृत्य ततो मन्त्रैः परिष्कारं चरेद्बुधः॥इति

संहितान्तरवचनैश्चोक्तरीत्या श्रीपांचरात्रोत्तरखण्डान्तर्गतशौनकब्रह्मसंवादरूपैकत्रिंशाध्या
येन। श्रोतुमिच्छामि संस्कारं भगवन् ब्रह्ममेधिनां। यद्वैष्णवानां विहितं तन्मे ब्रूहि पितामह॥
इत्यादिना॥एवंविधं ब्रह्ममेधं ये कुर्वंति हि वैष्णवाःते सर्वे वैष्णवं लोकं प्रयांति क्षीणकल्मषाः॥
इत्यन्तेनोक्तरीत्या च तस्याविलम्बेन श्रीचूर्णकरिपालनरथयानपूर्वकब्रह्ममेधसंस्कारादिल
क्षणचरमकैङ्कर्यं स्वयमेव परमादरेणाकार्षीत्॥ ५१ ॥ एवं वर्धितमङ्गलग्रामाधिपश्रीवैष्णव
दासनामविप्रवरमोक्षदानवृत्तांतव्याघ्रमोक्षणवृत्तान्तादयोप्यनुसन्धेयाः ॥ ५२ ॥ एवं भग
वद्रामानुजमुनिनिरतिशयकृपाकटाक्षभाजनीभूतस्य तत एव हेतोर्निरवधिकश्रीवेंकटनाथ
करुणापयःपारावारनीरनरायमाणस्यानन्तार्यस्यातिविचित्राणि भगवत्कटाक्षविशेषभाविता
नि चरित्राण्यन्यतोऽवगन्तव्यानि ॥५३॥ अनन्तार्यविषयानपि तद्गुणवैभवपरानिमान् श्लो
कान्नित्यानुसन्धेयानित्थं जगुरार्याः । आम्नायवाचामपि मृग्यभूमा श्रीवेंकटक्ष्माधरदिव्य
धामा। देवोऽनुधावन् प्रददाति यस्मै स्रजं भजे ऽनन्तगुरुं तमाद्यं॥१॥यतीन्द्रपादाम्बुजचञ्चरी
कं श्रीमद्दयापालदयैकपात्रं।श्रीवेंकटेशाङ्घ्रियुगान्तरङ्गं नमाम्यनन्तार्यमनन्तकृत्वः॥२॥जाया
सहायखननीयमहातटाकमुद्गारवाहिबटुवेषवृषाचलेंद्रं । श्रीवेंकटेशधृतदत्तमनोज्ञगन्धस्रग्ग

न्धिकन्धरमनन्तगुरुंप्रपद्ये ॥ ३ ॥ श्रीवेंकटेशमचिरस्मयमाननिर्यत्सौरभ्यगुम्भसुमनोभिरनन्यबुध्या। आल्हादयन्निजघनोपवनोदिताभिः श्रीमाननन्तगुरुरन्वहमाविरास्ताम् ॥ ४ ॥ इति ॥ ५४ ॥ अयं चानन्तार्योतिमात्रभगवद्रामानुजमुनिदिव्यचरणारविन्दप्रवणमानसस्तस्य वादिविजयधाटीष्वनुसन्धेयविरुदप्रबन्धात्मकं श्लोकपञ्चकं तदीयमङ्गलावहतया नित्यानुसंन्धेयमङ्गलाशासनदशकं श्रीमुखसूक्ताख्यद्राविडब्रह्मसंहिताध्ययनारम्भकालानुसन्धेयमेतद्विषयमन्त्ररूपद्राविडगाथाविशेषं च प्राणैषीत् ॥ ५५ ॥ एतस्य कुमारो रामानुजनामानन्तार्यसमानकैङ्कर्यरसः ॥ तेन भगवद्दिव्यालयस्य दक्षिणपश्चिमायां दिशि निर्मितं तदाचार्यश्रीरामानुजमुनिनामाङ्कितं दिव्यारामतटादिकं दृष्ट्वा स्वयमुत्तरपूर्वायां दिशि तथैव स्वाचार्यसम्बन्ध्यनन्तपूरुषनामाङ्किततटाकारामादिकमपरमपि कुर्वन् तेन सहैव भगवन्तं श्रीवेंकटनाथमनुदिनं सर्वविधकैङ्कर्येण सम्यगानंदयन्नासीत् ॥ ५६ ॥ इत्थमनन्तार्योनेकानि भगवत्कैङ्कर्याणि कुर्वन्ननेकान् विष्णुधर्मांश्च प्रवर्धयन्नासीत् ॥ ५७ ॥ इत्यनन्तार्यगुम्फितायांश्रीवेङ्कटाचलेतिहासमालायां षष्ठस्स्तबकः ॥ ॥ छ ॥ ॥ छ ॥

अथ श्रीवेङ्कटाचलमाहात्म्यपरिशीलनमूलकतत्पर्वतासाधारणकतिपयधर्मविशेषव्यवस्थाप

नवृत्तान्त उच्यते १ श्रीवेङ्कटाचलमाहात्म्यविषयपुराणभागान् समन्ततः परिशीलयन् भगवा
नूरामानुजमुनिः।वैकुण्ठलोकाद्गरुडेन विष्णोः क्रीडाचलो वेंकटनामधेयः॥आनीय च स्वर्णमुखी
समीपे संस्थापितो विष्णुनिवासहेतोः॥इति मार्कण्डेयपुराणद्वितीयाध्यायवचनेन॥ वाराहपु
राणांतर्गतप्रथमभागे चतुस्त्रिंशाङ्कचिह्नितद्वितीयाध्यायस्थैः॥ धरावराहदेवोऽपि लोकानुग्रह
काम्यया॥ भूमौ स्थातुं स्थलं दिव्यं बुद्ध्या निश्चित्य माधवः॥ गरुडं प्रेषयामास गिरिमानेतु
मद्भुतं॥ वैनतेय महासत्त्व गच्छ त्वमतिवेगतः॥ गत्वा तु परमं धाम क्रीडाचलमिहानय॥इति वच
नैः। वैनतेयोपि परमं धाम गत्वा ददर्श ह॥अप्राकृतममेयं च सर्वरत्नमयं गिरिं॥ हिरण्मयं महा
शृङ्गं पञ्चोपनिषदात्मकम्॥ इति वचनैः॥ नारयाणगिरिं नाम्ना क्रीडाद्रिं परमेष्ठिनः॥ योज
नत्रयविस्तारं त्रिंशद्योजनमायतं॥ शेषाकारं हरेः शेषं शेषिणं सर्वदेहिनां॥ दिव्या
कारं महापुण्यं पश्यतां मोक्षदायकं॥ एवंरूपं गिरिश्रेष्ठं स्कंधदेशे निधाय तम्॥ प
रिवारैरुपेतं च भगवत्परिचारकैः॥ आजगाम महावेगाद्गरुडः काञ्चनप्रभः॥ इति वचनैः॥
तत्रैव षट्त्रिंशाङ्कचिन्हितचतुर्थाध्यायस्थेन। वैकुण्ठादागतत्वेन वैकुण्ठाद्रिरिति स्मृतः॥
इति वचनेन च श्रीवैकुण्ठवर्तिपञ्चोपनिषण्मयाप्राकृतभगवत्क्रीडाचलरूपतया सुप्रसिद्धः॥

तदध्यायस्थेनैव । अयं कदाचिद्देवानां श्रीनिवास इवाबभौ ॥ श्रीनिवासगिरिं प्राहुस्त
स्मादेनं दिवौकसः॥इति वचनेन श्रीपतिदिव्यमंगलविग्रहरूपतयापि कदाचिद्देवानां भासमा
नत्वेन प्रसिद्धः। ब्रह्माण्डपुराणे द्वितीयाध्याये। अथाह भगवान् शेषमाहूय पुरतः स्थितं ॥
मेघगंभीरया वाचा हर्षोत्फुल्लविलोचनः ॥ श्रीभगवानुवाच ॥ अनन्त मत्प्रियो लोके न
त्वदन्योस्ति कश्चन ॥ तस्मान्मम प्रियं किंचित्कर्तव्यं भवताऽनघ ॥ श्रुतं हि भवता
सर्वं नारदोदीरितं वचः ॥ क्रीडासमुचिते देशे वस्तव्यमिति मे मतिः ॥ तत्र भूत्वा गि
रिवरो भवान्वसतु भूतले ॥ त्वत्फणामण्डलभुवि स्थातव्यं रमया सह ॥ शेष उवाच ॥
अनन्तोहं महादेव स्थास्यामि गिरिरूपधृत् ॥ भवांस्तु रमया सार्धं गिरिसानुषु रंस्यता
म् ॥ इति वचनैः अनन्तरूपतयाऽवगम्यमानः । पुनस्तत्रैवाध्यायान्ते ॥ अगस्त्याद्या
मुनिवरास्तपसस्सिद्ध्यपेक्षया ॥ तपांसि सुचिरं तेपुस्तन्निर्झरसमाप्लुताः ॥ विष्णोरपरदे
हत्वादाक्रंमन्नापदैर्गिरिम्॥नारायणांशसंभूतः शेषो हि गिरिरूपधृत्॥इति वचनैः शेषविग्रहरू
पतया भगवद्दिव्यमङ्गलविग्रहरूपतया च प्रतिपन्नः॥ वामनपुराणे एकविंशांकचिन्हितद्वि
तीयाध्याये॥ शुकाद्या मुनयः केचिद्भृग्वाद्याश्च तपोधनाः॥ प्रल्हादप्रमुखाः पुण्या अम्बरीषाद

यो नृपाः ॥ विष्णोरेवापरं देहं मन्वानास्तं नगोत्तमं ॥ पद्भ्यामाक्रमितुं भीताः पर्यंतेष्वेव वर्तिनः ॥ तन्निर्गतनदीष्वेव कुर्वाणाः स्नानतर्पणे ॥ तपः कुर्वंति वांछन्तः साक्षात्कर्तुं जनार्दनं ॥ इति वचनैरपि तत्त्वज्ञप्रधानैश्शुकादिपरमर्षिभिः प्रल्हादप्रमुखैः परमभागवतैः । अंबरीषादिराजर्षिभिश्च । श्रीविष्णुदिव्यमूर्तिबुद्ध्या प्राकृतशरीरेण पद्भ्यां चाक्रमितुं भीतैरधस्तादेवावस्थाय परमात्मानं साक्षात्कर्तुं चिरं तपश्चरद्भिः श्रीमन्नारायणदिव्यमङ्गलविग्रहरूपतयाऽनुसन्धीयमानत्वेन च प्रतिपन्नः श्रीवेंकटाद्रिरित्यंशं । निवृत्ताविद्या दिव्यसूरयोपि प्राकृतशरीरेण पद्भ्यां श्रीवेंकटाद्रिस्पर्शमनर्हं मन्यमाना एवाधस्तादेव स्थिता भगवन्मङ्गलाशासनं चक्रुरित्यंशं । श्रीवेंकटाद्रेर्मेरुपुत्रत्वशेषमारुतसंवादविधूतत्ववादस्तु कल्पभेदमात्रनिबंधन इत्यंशं । तदापि श्रीरामकृष्णादीनां दशरथवसुदेवादिपुत्ररूपत्वेपि स्वासाधारणाप्राकृतदिव्यरूपभगवदवतारत्ववत् श्रीवैकुण्ठवर्तिक्रीडाद्यवताररूपत्वं शेषानुप्रवेशभगवदनुप्रवेशकृततदीयविग्रहरूपत्वं चास्य मेरुपुत्रस्यैव सतो नासंभवदुक्तिकं । साक्षाद्गरुडेन वैकुण्ठादस्यानयनं मेरुपुत्ररूपेणावतीर्णस्य तस्य शेषमारुतसंवादव्याजेनानयनं चेत्येतावन्मात्रमेव वैषम्यं कल्पभेदायत्तं । अत एव । वेंकटाद्रिरिति ख्यातस्सर्वलोकनमस्कृतः ॥ मेरुपुत्रो महापुण्यः

सर्वदेवाभिवन्दितः ॥ वैकुण्ठलोकादानीतो विष्णोः क्रीडाचलो महान् ॥ गरुत्मतावेगवतास्वर्ण मुख्यास्तटे शुभे ॥ वर्तते देवसंघैश्च ऋषिसंघैश्च पूजितः ॥ इति वेंकटाद्रेः कल्पद्वयसिद्धमेरुपुत्रत्वगरुडानीतवैकुण्ठलोकक्रीडाचलत्वयोर्द्वयोर्धर्मयोरेकविशेष्ये सद्भावप्रतिपादनपरं स्कंदपुराणसप्तत्रिंशांकचिह्निताध्यायवचनद्वयं संगच्छते। एवमेव स्वामिपुष्करिण्याः श्रीवैकुण्ठवर्तिक्रीडावापिकारूपायास्सरस्वत्यवताररूपत्ववर्णनमपि न विरुध्यते। क्वचित् कल्पविशेषे दुश्चरतपश्चर्याकारिण्यास्सरस्वत्यास्तात्कालिकमनोरथविशेषपूर्तये स्वामिपुष्करिण्यामनुप्रवेशमात्रस्य भगवतोनुज्ञातत्वमात्रेण तादृशप्रवादोपपत्तेः। न चैतावन्मात्रेण श्रीवेंकटाचलस्य स्वामिपुष्करिण्या वा प्राकृतत्वशंकालेशावकाशः। अन्यथा तयोस्समन्ततस्सर्वतोमुखसंजोघुष्यमाणलोकोत्तीर्णपरमपावनाप्राकृतपञ्चोपनिषत्तत्त्वमयभगवदत्यन्तप्रियवस्तुरूपताया अनुपपन्नत्वादित्यंशं च स्वयमनुसंदधानः परेभ्यश्च सविस्तरमभिदधानश्च सन्। तत एव हेतोः पूर्वं कस्यांचिद्यात्रायां दिव्यसूरिवदेव स्वयमपि श्रीवेंकटाद्रेः पद्भ्यामाक्रमणमसहमानो ऽधस्तादेव चिरकालं स्थित्वा श्रीशैलपूर्णार्यानन्तार्यादिभिर्विशेषतस्संप्रार्थितोपि मुहुर्मुहुर्गंतुमनभ्युपगच्छन् श्रीवेंकटाचलमाहात्म्यपरस्कंदपुराणान्तरर्गतप्रथमभागस्थनवमाध्यायवचनैः। वेंकटाद्रिं गिरिं

तंतुप्रार्थयेत्पुण्यवर्धनं ॥ स्वर्णाचलमहापुण्यसर्वदेवनिषेवित ॥ ब्रह्मादयोपि यं देवास्सेवंते श्रद्धया सह ॥ तं भवंतमहं पद्भ्यामाक्रमेयं नगोत्तम ॥ क्षमस्व तदघं मेद्य दयया पापचेतसः ॥ त्वन्मूर्धनि कृतावासं माधवं दर्शयस्व मे ॥ प्रार्थयित्वा नरस्त्वेवं वेंकटाद्रिं नगोत्तमं ॥ ततो मृदुपदं गच्छेत्पावनं वेंकटाचलमित्येवंरूपैः श्रीवेंकटाद्रेः प्रकारविशेषेण कथंचिदारोहणाभ्यनुज्ञानसद्भावं च चिंतयन् कथंचित्सकृत्सकृद्भगवन्तमद्रिमारुह्य वन्दमानो विशेषतः श्रीपदपुर्यामेव निवासशीलश्शैलोपत्यकायामेव श्रीशैलपूर्णार्यसंनिधौ श्रीरामायणपठनमपि चक्रे ॥ २ ॥ तत इत्थं श्रीवेंकटाचलवैभवातिशयं शास्त्रप्रतिपन्नं सम्यगवगच्छन्नयं श्रीरामानुजमुनिः स्वस्य श्रीरामायणाचार्यभूतं श्रीशैलपूर्णार्यं स्वस्य प्रियशिष्यभूतं श्रीशैलानन्तार्यं चोभावेवैतो श्रीवेंकटाद्रिवैभवं श्रीवेंकटनाथवैभवं च सम्यग्विज्ञायापचारमंतरेण श्रीवेंकटनाथकैंकर्यं तदीयनिरतिशयमुखोल्लासकरं कुर्वाणौ विलोक्य स्वयमपि संतुष्यन्नन्यान् सर्वान् प्रायशोऽत्यन्तापचारपरायणांश्च पश्यन् ततः खिद्यन् तेषां तादृशविरुद्धप्रवृत्तिमूलापचारपरिहाराय काश्चिद्व्यवस्थाः कर्तव्या इति मन्वानः श्रीशैलपूर्णार्यश्रीशैलानन्तार्यावाहूय भोआर्यौ श्रीवेंकटाचले तद्वैभवानभिज्ञानां जनानां स्वच्छन्द

प्रवृत्तिमूलापचारपरिहाराय काश्चिद्व्यवस्थाः कल्पयितुमिच्छामि ॥ १ ॥ ताश्च युवाभ्यामि
हावश्यं निर्वर्तनीया इति च प्रार्थयामि ॥ २ ॥ केचित् कैंकर्यनिरताः केचिद्ब्रह्मणि निष्ठिताः ॥
ध्याननिष्ठास्तपोनिष्ठाः केचिदुद्यानकारिणः ॥ विग्रहालोकनपरास्तत्रासन्मुनिपुंगवाः ॥ के
चिद्गिरौ स्थिताश्चैव नित्यमीशं नमंति च ॥ गिरेः परिसरे केचिन्न्यवसन्नित्यमेव हि ॥ पुनरप्या
गमिष्याम इति जग्मुः परे तदा ॥ अगस्त्यो भगवांस्तत्र श्रीमद्वेंकटनायकं ॥ अर्चयन्विविधैः
पुष्पैः कृत्वा चोद्यानमुत्तमं ॥ चिरकालं महाभागाः सह शिष्यैर्महामुनिः ॥ पिबन्नानंदपीयूषं न्य
वसद्वेंकटाचले॥ इति वराहपुराणप्रथमभागत्रिपंचाशांकचिन्हितैकविंशाध्यायवचनैः। भगवत
स्संनिधावेव कर्तुमर्हानसन्निधौ। कर्तुमनर्हांश्च भगवन्मुखोल्लासहेतुव्यापारान् कुर्वतामधिका
रिविशेषाणामेव वेंकटाचलोपरिसततसंस्थितेरवगमेन अतथाविधा अधस्तादपि कर्तुं शक्येषु
गुणानुभवादिव्यापारेषु निष्ठावंतोऽधस्तादेव स्थातुमर्हंति। उत्सवादिकालेष्वेव परं भगवत्से
वार्थमूर्ध्वं गंतुमर्हंति नान्यदेति व्यवस्था कर्तव्या ॥ ३ ॥ एवं। कंदमूलफलाद्याश्च नोपभोज्याः
स्वतन्त्रतः। तत्रोत्पन्नास्तु राजेंद्र यतस्त्वप्राकृतो गिरिरितिस्कांदपुराणसुवर्णमुखरीमाहात्म्य
भागस्थवचनेन अप्राकृते श्रीवेंकटाचले समुत्पन्नानां भगवन्निवेदनयोग्यतया शास्त्रसिद्धाना

कंदमूलादीनां सर्वेषामेव पदार्थानां श्रीवेंकटनाथायानिवेद्यानुपभाज्यतावर्णनात् ॥ कंदमूला दिवस्तूनि भोज्यानि च हवींषि च ॥ निवेद्य पुरतो विष्णोस्तत्प्रसादोपजीविनः ॥ इति तत्प्र करण एव पुनः कथनाच्च देवालययोग्यतया विष्णवागमसिद्धानां पदार्थानां स्थलवासिनो दे शांतरागताश्च जनाः भगवद्दिव्यालय एव पाकं कारयित्वा श्रीवेंकटनाथाय निवेदनं कार यित्वा तन्निवेदितस्यैव हविरादेः स्वस्वगृहार्चामूर्तीनामपि निवेदनं कृत्वा तादृशेनैव हविरादिना तत्तत्कालोचितहव्यकव्यादिकर्म स्वस्वदेहयात्रां च कुर्युरित्यपि व्यवस्था कर्तव्या ॥ ४ ॥ एवं । देवार्पितैर्गंधमाल्यैर्हविषा च महर्षयः । आचरंतोर्चनां विष्णोरूषुस्तत्र महीधरे । इति ब्रह्मोत्तरखंडसप्तमाध्यायगतेन वचनेन गृहार्चामूर्तीनां श्रीवेंकटनाथसमर्पितगंधमा ल्यादिभिरेवार्चनानुष्ठानप्रतिपादनेन देवारामादिषु स्वातन्त्र्येण पुष्पादिग्रहणं गृहार्चाविग्र हाराधनार्थमकृत्वा श्रीवेंकटनाथार्थमेव पुष्पादीनि नीत्वा तस्मै समर्पितान्येव माल्यादीन्या नीय स्वस्वगृहार्चामूर्तीनामपि समर्प्य तान्येव जनाः स्वयमप्युपयुंजीरन्निति व्यवस्था च कार्या ॥ ५ ॥ इदमुपलक्षणीकृत्य भोग्यतया क्रियमाणपयःपरमान्नपायससूपापूपादीनपि क्षेत्रवासिनो जनाः स्वस्वगृहेष्वकारयन्तो भगवद्दिव्यालय एव कारयित्वा भगवते श्री

वेंकटनाथाय निवेद्यैव गृह्णीयुरिति देवालयायोग्यान् शाकशलाटुप्रमुखानन्नञ्च। कलावन्नगत
प्राणाः प्राणिनस्सर्वे एव हीत्युक्तरीत्या कलौ सर्वेषां जनानामन्नाधीनप्राणधारणतया देवा
लये यथापेक्षाकालं लाभासंभवेन क्षुन्निवारणस्यावश्यं कर्तव्यत्वेन च स्वस्वगृहेषु कारयेयुरि
ति च व्यवस्थाकार्या ॥ ६ ॥ एवं श्रीवेंकटाद्रौ वसतां जनानां देहवियोगकाले प्राप्ते प्रागेवा
धस्तान्नयनं कार्यमिति अचिन्तितदेहवियोगे प्राप्ते तथाभूतप्राणिदेहा अधस्तादेव नीत्वा सं
स्कार्या इति च व्यवस्था कार्या ॥७॥ एवंमृगपक्षिशुकादीनां रूपं कृत्वा परात्परः ॥ क्रीडते रम
या सार्धं सूरिभिस्तत्र पर्वते। इति वाराहपुराणप्रथमभागस्थचतुश्चत्वारिंशांकचिन्हितद्वादशा
ध्यायस्थवचनेन। मृगं वा पक्षिणं दृष्ट्वा गंधर्वं वा दिवौकसः ॥ असावेव हरिश्चेति विस्मयोत्फु
ल्लमानसाः ॥ अनुजग्मुर्गिरौ तस्मिन् दिदृक्षासक्तचेतसः ॥ इति तदध्यायस्थेनैव वचनांतरेण
च श्रीवेंकटाद्रौ विहरतां मृगपक्ष्यादीनां भगवद्रूपतया संभावनीयतावगमेन तामसपुरुषैस्तेषां
हिंसा न कर्तव्येति भगवदुत्सवे दिग्बलियोग्यदिव्यनगरीवीथिषु चरतां पादुकावाहनाद्या
रोहणं न कर्तव्यमिति। इममुत्सवमुद्दिश्य सेवार्थं यस्तु वासतः ॥ क्रमते पदमेकं तु गन्तुं शेष
गिरिं प्रति ॥ पदस्यैकस्य तस्यैव फलं भवति मत्पदं ॥ वेंकटाचलयात्रायां पदमेकं मुनीश्वराः

॥ ब्रह्महत्यादिपापघ्नं संसारार्णवतारकं ॥ ऐहिकं तु फलं तस्य ह्यवातरफलं भवेत् ॥ इति वाराहपुराणप्रथमभागैकपंचाशांकाचिन्हितैकोनविंशाध्यायवचनैः । उत्सवेषु च देवस्य नारायणगिरिं प्रति । गच्छंति ये नराः पुण्यास्तेषामपि फलं शृणु ॥ यानि त्वादधते पदानि च मुने नारायणाद्रिं प्रति स्तोकं स्तोकमपि द्विजा अपि जनास्तेषां फलं यच्छृणु । यावद्वेङ्कटशैलमात्मगृहतस्तावत्पदानां क्रमात्प्रायश्चैव पदेपदे क्रतुफलं भूयाद्भुवि प्राणिनामिति । वामनपुराणत्रिचत्वारिंशांकचिह्नितचतुर्विंशाध्यायवचनेन च ब्रह्महत्यादिपापनिवृत्तिभगवत्प्राप्तिलक्षणसंसारनिवृत्त्यादिषु साधनतयोक्तश्रीवेंकटाद्रियात्रायामेव देहयात्राशेषभूतवाहनाद्यारोहणस्यानुचितताया अवगतत्वेन विशेषतः श्रीवेङ्कटाद्र्यारोहणसमये पादुकावाहनाद्यारोहणं न कर्तव्यमिति च व्यवस्था कर्तव्या ॥ ८ ॥ एवं । चंडालयवनाद्यैश्च पतितैः पापिभिर्नरैः ॥ नारोढुं शक्यते दिव्यो ह्यप्राकृतशिलोच्चयः ॥ इतिवराहपुराणवचनेन चंडालयवनाद्यैस्तु वेदबाह्यैश्च नास्तिकैः ॥ नारोढुमपि यः शक्यः पावनः पर्वतोत्तमः ॥ इति वामनपुराणैकविंशांकचिन्हितद्वितीयाध्यायवचनेन च चंडालयवनपतितादिनीचानां गिर्यारोहणयोग्यताया असत्वावगमाच्चंडालादिभिरेतत्पर्वतारोहणं न कर्तव्यमिति च व्यवस्था कर्तव्या ॥ ९ ॥ ईदृशविशेषाचारव्यवस्थाश्रीवें

कटाद्रौ कियद्दूरप्रदेश इति चेत्। इति पृष्टः शिवः प्राह स्वामिन्नित्यच्युतं वचः॥ स्वामिंस्त्वया सदा यत्र स्थीयते वेंकटेश्वर॥ तत्रैव देव स्थातव्यं मया वृषगिरीश्वर ॥ इति पृष्टः पुनः प्राह नीलमेघसमद्युतिः ॥ आकल्पं च वसामीह वेंकटाह्वयभूधरे ॥ त्वमप्यत्र मृडानीश महादेव वस प्रभो ॥ उपत्यकायामस्याद्रेः शोचिष्केश दिशीश्वर ॥इति वाराहपुराणप्रथमभागस्थैकोन पंचाशांकचिन्हितसप्तदशाध्यायवचनैः श्रीवेंकटाद्रावाविर्भवंतं श्रीनिवासं निषेवितुमागता नां ब्रह्मरुद्रादीनां प्रेषणसमये रुद्रे भवत्संनिधौ मया वस्तव्यमिति श्रीवेंकटनाथं प्रार्थयति भगवता श्रीवेंकटाद्रेरुपत्यकायां योजनदूरविप्रकृष्टायामाग्नेयदिशि नित्यवासं कुर्विति नि यमयता अप्राकृते श्रीवेंकटाद्रौ श्रीस्वामिपुष्करणीप्रभृतिकापिलतीर्थपूर्वतीरपर्यंतो भागो भगवत्सान्निधिरूपो देवतांतरवासानर्हः इति च प्रतिपादनस्य कृतप्रायत्वात् वेंकटाद्रि समं स्थानं ब्रह्मांडे नास्ति किंचनेति श्रीमान् शेषगिरिश्चायं पावनानां च पावन इति च श्रीवेंकटाद्रेः समंततः सर्वोत्कृष्टपरमपावनतया सर्वत्र प्रसिद्धत्वेपि। तीर्थस्य परितस्ती रे पुण्ये योजनमात्रके। तपःपरममास्थाय न्यवसन्मुनिसत्तमाः ॥ निरंतरं हर्षयुक्तास्तत्प्रसादा भिलाषिणः॥ इति वचनेन केचित् परमर्षयः स्वामिपुष्करणीं परितो योजनविस्तृतः प्रदेशो

विशेषतः परमपावनो भगवत्सान्निध्यविशेषशालीत्यध्यवस्य तत्र तपस्यंतो नित्यवासमकार्षुरिति सुवर्णमुखरीमाहात्म्यपरभागे प्रतिपादनाच्च श्रीस्वामिपुष्करिणीप्रभृतियोजनदूरपर्यंतमस्मिन् गिरावीदृशविशेषाचारमर्यादा स्थापनीयतयावगम्यते ॥ १० ॥ इत्थं परमपावनं श्रीवेंकटाद्रिस्थलं श्रीवेंकटनाथदिव्यालयमेव संभाव्यैतत्क्षेत्रवासिभिरन्यैश्चावश्यमनुष्ठेयतया मया निश्चिता इमा व्यवस्था अस्मदभिप्रायानुरोधेन निर्वर्तयितुं स्वयमेव भगवता श्रीवेंकटनाथेन संकल्पः कर्तव्यः ॥ ११ ॥ एतासु व्यवस्थासु सतीषु प्रायशो जनानामपचारप्रसंगो न प्रसज्जेदिति मन्य इत्यवोचत् ॥ ३ ॥ ततः श्रीरामानुजमुन्यभिहिताश्शास्त्रसंमताश्च विशेषाचारव्यवस्थायुक्ता मन्वानौ तौ श्रीशैलपूर्णार्यानंतार्यौ भगवता श्रीवेंकटनाथेनावश्यमिमा व्यवस्था निर्वर्तयितव्या इत्यनुसंदधानौ भगवंतमपि भगवन् यतिराजमनोरथं सफलं कुर्या इति मनसा प्रार्थयामासतुः ॥ ४ ॥ ततस्तद्रात्र्यां श्रीशैलपूर्णार्यस्वप्ने भगवति श्रीवेंकटनाथे संमुखमागत्य भोःश्रीशैलपूर्णार्य मन्नाथमुनेर्यतिराजस्य शासनानुरोधेन प्राक्केनचिद्धेतुना परित्यक्तयोरपि श्रीसुदर्शनपांचजन्ययोः पुनर्ग्रहणं यथामदिष्टमासीत् तथा अधुनापि तदीयव्यवस्थांतराण्यपि मदिष्टान्येवेति भाषमाणे तमिमं वृत्तांतमाकर्ण्य प्रबुद्धः

श्रीशैलपूर्णार्यस्तमिमं वृत्तांतं पंडितपामराणां सर्वेषां विदितं भगवतैव कारयितुमनाः परदिने भगवत्सन्निधिमुपगम्य भो भगवन् श्रीवेंकटशैलनाथ श्रीनिवास सैषा भवता मम स्वप्ने कृता दिव्याज्ञा प्रत्यक्षतः सर्वलोकविदिता कर्तव्येति प्रार्थयामास ॥५॥ तदानीं श्रीवेंकटनाथोऽपि कंचन भक्तमाविष्टः भो जना मदीयामिमां दिव्याज्ञां सर्वे भवंतः समाकर्णयंतु ॥ १ ॥ अहं पुरा श्रीरामाद्यवतारेषु वसिष्ठादिगुर्वाज्ञामिवाधुना श्रीभाष्यादिप्रबंधनिर्माणमुखेन मदीयं सर्वस्मात् परत्वं सम्यक्प्रकाशितवतो मह्यं सुदर्शनपांचजन्यावपि प्रदत्तवतः श्रीभाष्यकारस्यापि दिव्याज्ञामादृत्यानुतिष्ठासामि ॥ २ ॥ मामाश्रिताः सर्वेपि श्रीभाष्यकारदिव्याज्ञासिद्धान् सर्वान् व्यवस्थाविशेषान् मदभिमतान् ज्ञात्वा निःशंकं समाचरंत्विति प्रोवाच ॥ ६ ॥ ततस्तत्रत्याः सर्वे जनास्तामिमां श्रीवेंकटनाथदिव्याज्ञां समाकर्ण्य संहृष्टास्तदानीं श्रीवेंकटनाथस्यातरंगकिंकरेण भगवत्प्रेरितेन बिंबाधरनाम्नार्चकवर्येण श्रीशठकोपमुद्धृत्य सर्वेषां मस्तके निक्षिप्य भो भागवताः अस्मिन् श्रीवेंकटाचले श्रीवेंकटनाथस्याभिमताः शास्त्रस्य चानुमताः श्रीभाष्यकारकृता इमा व्यवस्था अनुतिष्ठंतो जना भगवदत्यंतप्रियतमाः परमभागवतः स्युः अननुतिष्ठन्तश्च जना भगवद्दिव्याज्ञारूपवेदशास्त्रबाह्यास्स्युरिति नियमितास्संतो

यथोक्ताः श्रीरामानुजमुनिकृताः व्यवस्था यथावदनुतिष्ठंतोऽवर्तंत ॥ ७ ॥ अथ श्रीवें कटाद्रौपुष्पमालादिपरिग्रहनिषेधवृत्तांत उच्यते ॥ ८ ॥ इत्थं भगवद्दिव्याज्ञया भगवद्रामानुजमुनिकृताः शास्त्रानुगुणा विशेषतो भगवन्मुखोल्लासकरीर्व्यवस्थाः सर्वेषु जनेष्वकपटमनुतिष्ठत्सु श्रीशैलपूर्णार्यशिष्ये कस्मिंश्चिद्वैष्णवे प्रकृतिवश्यतया कस्मिंश्चिद्दिवसे श्रीवेंकटनाथायासमर्पितामेव पुष्पमालां शिरसि दधाने स्थिते तद्रात्र्यां श्रीशैलपूर्णार्यस्वप्ने भगवति श्रीवेंकटनाथे प्रत्यक्षतः सन्मुखे स्थित्वा भोः श्रीशैलपूर्णार्य भवच्छिष्यः प्रकृतिवश्यस्सन् मम परिमलद्रोहमकार्षीदिति ब्रुवाणे श्रीशैलपूर्णार्यस्तमिमं वृत्तांतं श्रुत्वा प्रबुद्धः परदिने भगवत्सन्निधिं गत्वा भगवन्नितः प्रभृत्यन्वहं भवन्माल्यानि कस्मैचिदपि न प्रदिश कलिदोषेणानुकूलानामपि प्रतिकूलबुद्धिजननादस्मिन् स्थले बद्धमर्यादाप्रसंगो भवेत् भवति श्रीवेंकटाद्रौ कस्मैचिदपि मालामप्रदिशति जनानां भगवत्समर्पितामेव मालां धारयामीति वंचनाकरणायोगेन राजदंडभयादमर्यादाप्रसंगस्य नावकाशो भवति ततश्चास्मिन् श्रीवेंकटाद्रौ पुष्पमालाधारणस्यैव प्रतिषेधे राजदंडवशत एव सिद्धे सति तत्पूर्वकप्राकृतसकलभोगोपि संकुचितो भवति अत एतन्मदीयापेक्षितनिर्वर्तनाय दृढतरं संकल्पं कुर्विंति

प्रार्थयामास ॥ ९ ॥ ततो भगवानपि श्रीनिवासस्तदीयं विज्ञापनं श्रुत्वार्चकमुखेन भोः श्री शैलपूर्णार्य मदीयार्चावतारपरिग्रहस्याश्रितमनोरथपूर्णैकफलकत्वाद्भवदीयमनोरथनिर्वर्तनाय मया धृतानि पुष्पमाल्यादीन्यद्यप्रभृति न कस्मैचन दास्यामि तत इतःप्रभृति मया धृतोज्झितपुष्पमाल्यादीनि परिवारदेवेभ्यो देयानि वाप्यादिषु वा निक्षेप्तव्यानीति स्फुटतरमाज्ञां चकार ॥ १० ॥ तत इमं वृत्तांतं शृण्वन् यतिराजोपि सन्तुतोष ॥ ११ ॥ अथ श्रीवेंकटाद्रौ सर्वदा स्थित्वा श्रीवेंकटनाथदिव्यैश्वर्यपरिपालनाय स्वप्रतिनिधितया प्रथमं श्रीभगवद्रामानुजमुनिस्थापितस्य श्रीसेनापतिनाम्नो नैष्ठिकब्रह्मचारिण एकांगिवर्यस्य वृत्तांत उच्यते ॥

॥ १२ ॥ भगवान् श्रीरामानुजमुनिः पूर्वोक्ताचारविशेषव्यवस्थानां करणानंतरं श्रीशैलपूर्णार्यशिष्यस्यकस्यचिद्वैष्णवस्य कलिदोषवशेनपूर्वोक्तव्यवस्थाविशेषातिलंघनप्रसंगं च दृष्ट्वा यथावत् पूर्वोक्ताचारविशेषव्यवस्थानां स्वयमनुष्ठानाय स्थलवासिनां तदातदा दर्शितव्यवस्थाविशेषान्महाभ्युदयफलान् ज्ञापयित्वा तैरनुष्ठापनाय तदातदा देशाधिपते राज्ञः श्रीवैष्णवधर्मोपदेशपूर्वकं श्रद्धां संजनय्य तन्मुखेन श्रीवेंकटनाथदिव्योत्सवादिलक्षणैश्वर्यसंमृद्ध्यभिवर्धनाय चास्मिन् दिव्यदेशे नियतस्थायिना विरक्ताधिकारिणा केनचिद्भवितव्यमिति चिंतयन् श्री

शैलपूर्णार्यश्रीशैलानंतार्यावुभावपि समाहूय भो आर्यावस्मिन् दिव्यदेशे श्रीवेंकटनाथदिव्यै
श्वर्यपरिपालनाय लोकानामपचारपरिहाराभ्युदयविशेषहेतुतया अस्मत्कृतविशेषाचारव्यव
स्थानां यथावत्परिपालनाय च श्रीभगवद्दिव्यालयसर्वपरिकरनियंतृतया वैराग्यप्रधानः क
श्चिद्विलक्षणोऽधिकारी अस्मिन् दिव्यदेशे नियतवासी स्थापनीय इति चिंतयामि ॥१॥ भवद्भ
यात्सततगुणानुभवकैंकर्यैकपरायणाभ्यां भगवद्दिव्यालयपरिकरगुणागुणसाक्षात्करणतदनु
गुणशिक्षणाद्यसहिष्णुभ्यां तत्तत्कालेषुभगवद्दिव्यालयेनियमितस्सन्निधाय तत्तत्कालोचितका
र्यवैयाकुलीमूलपरिश्रमस्य दुःसहतया दुष्करतया च भवन्नियाम्यतया भवदाज्ञानुविधायिनं
कंचिद्यथोक्तकार्यनिर्वाहणपरं विरक्तमधिकारिणं स्थापयितुमिच्छामि॥२॥ तदत्र संमन्यमाना
भ्यां भवद्भ्यां मयाद्य स्थाप्यमानः पुरुषः स्वाधिकारात्प्रमत्तो यथा न स्यात्तथानुपालनीयः॥३
नचाहमत्रैव दिव्यदेशे नियतं स्थातुं शक्ष्यामि येनाहमेवैनमित्थमनुपालयेयामित्यभिधाय।
वर्णिनो नैष्ठिकी बुद्धिर्वैराग्ये यदि दृश्यते ॥ संकल्प्य बुद्धिं तां धीराः काषायं धारयेत् पटं ॥
इति पारमेश्वरसंहितावचनोक्तरीत्या ब्रह्मचारिण आश्रमांतरविरक्तस्योर्ध्वरेतसो मंत्रपुर
स्सरं काषायवस्त्रं धृतवत एव नैष्ठिकब्रह्मचारिरूपत्वात्तादृशो ऽधिकारी कश्चन संपादनीय

इत्यभिदधानः तदानीमनंतार्यशिष्यमेकं ब्रह्मचारिणं गुरुकुलवासश्रद्धालुतया सर्वदा तदीयसन्निधौ कैंकर्यैकपरायणं वैराग्यशीलं दृष्ट्वा तमाहूय हितोपदेशं कृत्वा स्वाभिमतपद्धत्या काषायशाटीं परिग्रहीतुं श्रीवेंकटनाथदिव्यालये यथोक्तरीत्या सकलकैंकर्यं निर्वर्तयितुं चाभ्युपगमय्यानंतार्येणाप्यनुज्ञां तस्मैदापयित्वा नैष्ठिकब्रह्मचर्यांगतया यथोक्तवचनसिद्धं काषायवस्त्रं यथाविधिमंत्रपुरःसरं धारयित्वा विष्वक्सेनवद्भगवदीयसर्वकैंकर्यधुरंधरतया संन्यासाश्रमांगयोः त्रिदंडकाषाययोरेकस्य काषायवस्त्ररूपांगस्य वैराग्यलक्षणस्य धारणेन च विष्वक्सेनैकांगीति सेनापतियतिरिति च संज्ञां च दत्वा भो एकांगिन् यथा श्रीवेंकटनाथदिव्यैश्वर्यस्य हानिर्न स्यात् यथा च भगवत्संनिधिकैंकर्यपरा नापचारं कुर्युःतथा हितोपदेशंकृत्वा तैः स्वामिकैंकर्यं निर्वर्तय श्रीवेंकटनाथस्य भगवतो दिव्यमंगलविग्रहाय दिव्याधराय चार्हान् सर्वानौपचारिकसंस्पर्शिकाभ्यवहारिकानतिकल्याणतमान् भोगान् यथाविधि निर्वर्तय देशाधिपतेर्भगवद्धर्माभिरुचिं तदातदा तन्निकटं गत्वा प्रवर्धय तन्मूलकतया प्रमुषितान् धर्मानादिर्भावयन्नपूर्वांश्च तत्तद्देशकालसमुचितान् धर्मान् संजनयन् विद्यमानांश्च धर्मानभिवर्धयन् श्रीशैलपूर्णार्यानंतार्ययोः श्रीवेंकटनाथनिरतिशयकैंकर्यधुरंधरयोर्निरतिशयभगवत्प्रीतिभाज

नयोराज्ञां च शिरसानुवर्तयन् श्रीवेंकटनाथदिव्यैश्वर्यं सम्यक्परिपालयेति नियुज्य श्रीरामावतारे हनुमत एव भगवतो निरवद्यनित्यकैंकर्यधुरंधरतया तदभिमानलाभाय तदीयदिव्यालयसंनिधावेव मठमपि वासाय परिकल्प्य श्रीरामायणग्रंथशांतिकाले श्रीशैलेपूर्णार्यप्रसादितं स्वसाध्यभूतं भगवंतं श्रीचक्रवर्तिकुमारमपि तत्र संस्थाप्य तदाराधनपरायणं च तं कारयित्वा भगवत्कैंकर्यधुरंधरस्य श्रीचक्रवर्तिकुमाराराधनैकतत्परस्यास्य प्राक् तथाविधपदभागिहनूमत्संबंधिलक्षणान्येव भगवत्कैंकर्यधुरंधरत्वाभिव्यंजकासाधारणलक्षणानि समुचितानि हनूमदभिमानपोषकतया निरवद्यभगवत्कैंकर्यलक्षणपरिकरभूतानि चेत्यनुसंधाय हनूमन्मुद्रांगुलीयकमेकं हनूमन्मुद्रांकितां भगवद्दिव्यालयकवाटबंधनयंत्रकुंचिकामेकां हनूमन्मुद्रांकितामेकां घंटां हनुमन्मुद्रांकितपताकमेकं ध्वजं च निर्माप्य श्रीवेंकटनाथसंनिधौ समर्प्य तन्नियमनमुखेन तस्मै दापयित्वा ततः प्रभृति कैंकर्ययात्राकालेषु तद्घंटानादेन तेन ध्वजेन च साकं गमनं कार्यमिति हनूमन्मुद्रांगुलीयकेन कोशागारधान्यागारभगवद्दिव्यालयादिद्वारबंधनकवाटयंत्रेषु द्रव्यभूषणादिमंजूषासु विशेषतः संरक्षणीयसर्वस्थलेषु च रक्षणपरिकरतया मुद्रणं कर्तव्यमिति हनूमन्मुद्रांकितकवाटबंधनयंत्रकुंचिकया च प्रतिदिनं

सायंप्रातर्भगवदाराधनसमाप्तिकाले भगवद्दिव्यालयकवाटबंधनयंत्रयंत्रणं कार्यमिति च सर्वतो भगवद्दिव्यैश्वर्यसंरक्षणार्था व्यवस्थाः कृत्वा स्वचरणकमलसेवकं यादवराजमाहूय भो यादवराज अनुदिनमभिवर्धमानमहाकालिकोलाहलबलेन श्रीवेंकटनाथदिव्यैश्वर्यस्य सर्वतः क्षतिमाशंकते मामकीनं चेतः तदिमा व्यवस्था अहमकार्षं ता एता व्यवस्था यथाक्रमं निर्वर्तय यथा चैते सर्वे परिजनपरिचारका अस्य विष्वक्सेनैकांगिनो मत्प्रातिनिधितया मयानियमितस्य सर्वात्मना विधेयाः स्युः। यथा च तदीयशासनातिलंघने स्वाधिकारात् प्रच्यावनीयाश्च स्युः। तथा त्वं निपुणतरोग्रशासनपत्रिकां सुदृढां कुर्याः। एवमीदृशाधिकारिणः कदाचिदतिपत्तौ स्वाधिकारादनवधानतो निवृत्तौ वा ममापि माननीययोरतिमहतोर्महनीययोः श्रीशैलपूर्णार्यानंतार्ययोरनुमतिमाहृत्यान्य एव तादृशः कश्चित्तत्स्थाने स्थाप्यतां ईदृशस्य कस्य चिदधिकारिणोऽसत्त्वे स्वामिकैंकर्यं निरवद्यं न निर्वर्तेत तस्माद्वश्यमेव यथोक्तरीत्या शासनपत्रिका कर्तव्येति नियम्यते। न तादृशशासनपत्रिकां च कारयित्वा सर्वानर्चकपरिचारकान् साधिकारिणस्तस्य एकांगिनो विधेयान् कारयित्वा तेन सर्वमपि श्रीवेंकटनाथकैंकर्यं यथामनोरथं निर्वर्तयामास ॥ १३ ॥ इत्थं श्रीरामानुजमुनिः स्वस्थाने

श्रीसेनापतियत्यपरनामानं विष्वक्सेनैकांगिनं स्थापयित्वा श्रीशैलपूर्णार्येण स्वस्मै प्रसादितं श्रीचक्रवर्तिकुमारमपि तेनाराधनीयं व्यवस्थाप्य निश्चितहृदयः प्रागेव श्रीपदपुर्यां प्रतिष्ठापितस्य श्रीगोदादेवीसमेतस्य श्रीचित्रकूटाधिनाथस्य श्रीगोविंदराजस्यापि दिव्यैश्वर्यं निर्विघ्नं निर्वर्तनीयमिति यादवराजमाज्ञाप्य श्रीरंगनगरीं गतस्तदातदा श्रीवेंकटाद्रिवैभवं विचारयन्नासीत् ॥अथ श्रीवेंकटाद्रौ श्रीमद्रामानुजमुनिस्थापितश्रीवेंकटनाथशठकोपयतींद्रवृत्तांत उच्यते ॥ १५ ॥ श्रीशेषावतारभूतश्रीभगवद्रामानुजमुनिः सकलदिव्यदेशपरिरक्षणैकपरायणः श्रीवेंकटाद्रिदिव्येशं प्रत्यपि कृतासु बव्हीषु यात्रासु प्रथमयात्रायां विठ्ठलदेवनामानं कंचिद्राजानमंतरंगकिंकरीकृत्य तन्मुखेन वृत्त्यर्थं बालमंज्यनामानं कंचन नदीमातृकं ग्रामं दापयित्वा निजचरणकमलसमाश्रितान् कतिपयश्रीवैष्णवान् श्रीपदपुर्यामावासयन् तेभ्यः सकलतत्त्वार्थानुपदिशन् दिव्यसूरिवत् पुराणसिद्धशुकादिपरमर्षिगणप्रल्हादादिभागवतगणांबरीषादिराजर्षिगणवच्च श्रीवेंकटाद्रिं श्रीशेषावताररूपतया श्रीवैकुण्ठलोकागताप्राकृतभगवत्क्रीडाचलरूपतया भगवतो विष्णोरेव दिव्यमूर्तिरूपतया च पुराणप्रतिपन्नं स्वयमप्यारोढुमसंमन्यमानोऽधःप्रदेशादेव श्रीवेंकटनाथमंगलाशासनमपि कुर्वाण उपत्यकायां श्रीपदनग

र्यामेव कंचित्कालं स्थितः ततः श्रीवेंकटाचलादवरुह्य बहुभिः श्रीवैष्णवैः सह समागतेन प्रागुद्राविडब्रह्मसंहितार्थान्वाख्यानकालक्षेपसमयकृतस्वीयदिव्याज्ञयैवेह समागत्य नंदनवनतटाकादिकैंकर्यं कृत्वानुदिनमतिसुरभितुलसिकाकुसुममालिकादिसमर्पणकैंकर्येण भगवंतमानंदयता ततो निरतिशयभगवत्करुणाप्रवाहपरिणाहभाजनेनानंतार्येण बहुधाभ्यर्थितः श्रीवेंकटगिरिमारुह्य भगवद्दिव्यालयस्य दक्षिणपश्चिमायां दिशि स्वनियमनानुरोधिनानंतार्येण कृतं नंदनवनतटाकादिकमभिवीक्ष्य संतुष्टस्तं करुणाशीतलकटाक्षधारासारसेचनालिंगनादिभिरभिनंद्य स्वामिपुष्करिण्यां स्नात्वा श्रीवराहभगवंतं श्रीवेंकटनाथं चाभिवंद्य श्रीभगवद्यामुनमुनिनियमनेन चिरकालात्प्रागेवेह समागत्य भगवदभिषेकतीर्थानयनादिकैंकर्येण श्रीवेंकटनाथमानंदयतः स्वमातुलस्य श्रीशैलपूर्णार्यस्य नियमनेन दिनत्रयमनशन एवोपरि भगवंतमभिवंदमानः स्थित्वा ततोऽवरुह्य श्रीपदपुर्यामेव संवत्सरमुषित्वा श्रीशैलपूर्णार्यसमीपे श्रीरामायणविशेषार्थानधिगम्य तत्तत्कालसमुपस्थितकैंकर्यविशेषांश्च कुर्वाणः पुनः श्रीरंगं जिगमिषुः श्रीवेंकटनाथमभिवंद्य लब्धानुज्ञः स्वविरहासहिष्णवे स्वात्यंतप्रियशिष्यायानंतार्याय यथाविधि स्वीयदिव्यमंगलविग्रहं कंचिदवतार्य सम्यगालिंग्य दत्वा श्रीशैलपू

र्णार्याद्गोविंदभट्टार्थमुदकधारापूर्वकं लब्ध्वा तमपि नयन् सपरिवारं श्रीरंगमेव जगाम ॥
॥ १६ ॥ ततोऽपरस्यां यात्रायां स भगवान् श्रीरामानुजमुनिः शैवजनकृतश्रीवेंकटनाथदेवतांतरत्ववादकोलाहलपरिहारार्थमागतो निर्धूतनिखिलशैववादकोलाहलजालो देशाधिपतिं यादवराजमंतरंगकिंकरीकृत्य विमानमंडपगोपुरादिकैंकर्याणि कृत्वा श्रीचित्रकूटाधिनाथं श्रीगोविंदराजं देवाधिदेवेन सह क्रिमिकंठचोलोपद्रवत आगतं श्रीपदपुर्यां प्रतिष्ठाप्य तदीयमहिषीत्वेन भूदेवीरूपां वामहस्तविलसत्कल्हारां श्रीगोदादेवीं भगवतो दक्षिणपार्श्वे प्रतिष्ठाप्य तदीयमहोत्सवादीन् श्रीवेंकटनाथदिव्योत्सवाविरोधेन निर्वर्तनीयां व्यवस्थाप्य तत्कालप्रसक्तान्यनेककैंकर्याण्यपि कुर्वाणः पुनः श्रीरंगं जिगमिषुः श्रीशैलपूर्णार्यानंतार्यौ पुरस्कृत्य श्रीवेंकटाद्रौ श्रीरामदूतस्य हनुमतोग्रे मठं कंचिन्निबध्य तत्र प्राक्स्वस्य श्रीरामायणशांतिकाले श्रीशैलपूर्णार्येण प्रसादीकृतं श्रीचक्रवर्तिकुमारं तत्र स्थापयित्वा स्वप्रतिनिधितया तदाराधनाय श्रीवेंकटनाथसर्वकैंकर्यनिर्वाहाय चानंतार्यशिष्यं गुरुकुलवासश्रद्धालुतया तदीयसन्निधावेव सततकैंकर्यपरायणं कंचन नैष्ठिकब्रह्मचारिणं पारमेश्वरसंहितोक्तरीत्या यथाविधि काषायशाटिकाप्रदानेनैकांगिशब्दाभिलपनीयं सेनापतियति

नाम्ना संज्ञितं हनुमन्मुद्रांकितांगुलीयकघंटाध्वजकुंचिकादिकतिपयविशेषलक्षणसंपन्नं कारयित्वा तस्मिन्मठे संस्थाप्य यादवराजेन श्रीवेंकटनाथदिव्यालयसंबंधिनः सर्वान्परिजनपरिचारकान् साधिकारिणः सर्वात्मना तस्य विधेयभावमापन्नान् कारयित्वा श्रीशैलपूर्णार्यानंतार्यवशवर्तिनं च तं कारयित्वा तावनुज्ञाप्य स्वयं निश्चितहृदयः श्रीरंगनगरं जगाम ॥१७॥ इत्थं विष्वक्सेनैकांगिना श्रीसेनापतियत्यपरनाम्ना श्रीशैलपूर्णार्यानंतार्याभ्यामनुपाल्यमानेन यथाविधि श्रीवेंकटनाथसर्वकैंकर्यजातं निर्वर्त्यमानमाकर्णयञ्छ्रीरामानुजमुनिस्तदा तदागत्य स्वयमपि संपश्यन्संतुतोष ॥ १८ ॥ ततः कस्यांचिद्यात्रायां स भगवाञ्छ्रीरामानुजमुनिः श्रीवेंकटाद्रिमागत्य श्रीवेंकटनाथमभिवंदमानस्तदानीं विंशत्युत्तरशतद्वयाधिकचतुःसहस्रीसंख्येषु ४२२० कल्यब्देषु एकचत्वारिंशदधिकसहस्रसंख्येषु १०४१ शालिवाहनशकाब्देषु च गतेषु स्वात्मानं द्व्यधिकशतवर्षवयस्कं जानन्ननंतार्यमाहूय भोअनंतार्य द्व्यधिकशतवर्षवयस्कोऽहमभूवं इतःपरमिहासकृदागंतुं न शक्ष्यामि श्रीशैलपूर्णार्यश्च सपुत्र एव परमं पदमगात् तस्मात्त्वमेक एवाद्यात्र श्रीवेंकटनाथकैंकर्यधुरंधरः षट्षष्टिवर्षवया वृद्धशिराश्चासि अतस्त्वमेव चात्रत्यान्सर्वाञ्छ्रीश्रीवेंकटनाथकैंकर्यपरान्निर्वोढुम

हेसि अयं च तावकीनः सेनापतियत्यपरनामा विष्वक्सेनैकांगी मदीयश्रीचक्रवर्तिकुमार भगवदाराधकतया श्रीवेंकटनाथकैंकर्यधूर्वहतया च प्राङ्मया नियमितो नैष्ठिकब्रह्मचारी चैकाकी सर्वकैंकर्यभारं वोढुं न शक्नोति अत एनं परिव्राजकाश्रमेण संयोज्य प्रधानी कृत्य एतत्सहायतया त्रिचतुरानन्यानेकांगिनश्च कल्पयित्वा तांश्चैतदधीनान्कृत्वा तैः स वैः सम्यक्छ्रीवेंकटनाथकैंकर्यं निर्वर्तयितुमिच्छामि एवं श्रीशठकोपदिव्यसूरेः श्रीमुखसू क्तारव्यद्राविडब्रह्मसंहितायां तृतीयकांडे तृतीये श्रीमुखसूक्ते श्रीवेंकटनाथस्य येनयेन धाता गच्छति तेनतेन सह गच्छतीति श्रुत्युक्तरीत्या सर्वदेशसर्वकालसर्वावस्थासु सहचरी भूय समुचितसर्वविधकैंकर्याणि कुर्यामिति मनोरथं कुर्वाणस्य तथाविधमनोरथनिर्वह णाय तन्नाम्ना कंचनात्र स्थापयित्वा तेन श्रीवेंकटनाथसर्वविधकैंकर्यं कारयितुं चिरात्प्रभृ ति कांक्षामि तत एनमेव तावकीनं सेनापतियतिनामानं विष्वक्सेनैकांगिनं परिव्राजकाश्र मं प्रापय्य तन्नामयुतं च कारयितुमिच्छामीत्यभिधाय तेनानुमोदितः सन् विकारिसंवत्सरे मकरमासे शुक्लपक्षे शुक्रवासरे शुभमुहूर्त्ते विष्वक्सेनैकांगिने यथाविधि परिव्राजकाश्रमं द त्वा श्रीवेंकटनाथशठकोपयतींद्र इति संज्ञां च विधाय तमेव स्वमठे प्राधान्येन श्रीचक्रवर्ति

कुमाराराधकतया निवेश्य तेनैवानंतार्यशिष्याणां चतुर्णामेकांगिशाटीर्दापयित्वा तान् श्रीवेंकटनाथकैंकर्यैकपरायणांस्तदनुयायिनश्च कृत्वा सर्वानेतान्सर्वात्मनानंतार्याधीनांश्च कारयित्वा यादवराजमाहूय भो यादवराज द्व्याधिकशतवर्षवया वृद्धोहमितः परं यावद्देहपातं श्रीरंग एव वर्तितुमिच्छामि असकृदिहागंतुमपि न शक्नोमि तस्मादेनमनंतार्यं पुरस्कृत्यानेन शठकोपयतींद्रेण चतुर्भिरेतैरेकांगिभिः संमतेन श्रीवेंकटनाथकैंकर्यं कृत्स्नमपि त्वमेव सम्यक्प्रवर्तयितुमर्हसि महाकलिदोषवशादास्तिकानामपि द्रोहबुद्धिः संजायेत अत एते विरक्ताः कैंकर्यैकपरायणाः कैंकर्यपरामर्शे विनियुक्ताः श्रीवेंकटनाथद्रव्यायव्ययदिव्यभूषणादिविषये शठकोपयतींद्रसंबंधिजनैरप्येकं लेख्यं लेखनीयतया व्यवस्थाप्य मंदिरकार्यदर्शिभिरधिकारिभिर्भगवद्द्रव्यापहारो यथा न क्रियेत तथा व्यवस्था कर्तव्या एते च चत्वार एकांगिनः प्राड्विमितस्य सेनापतियत्यपरनाम्न एकांगिन एकस्य स्थाने परस्परसहकारितया तत्तत्कार्याणि सुखेन कर्तुं नियमिताः एतैः सह सर्वकैंकर्यकारितया सकलकैंकर्यनिर्वाहधुरंधरतया चायं शठकोपयतींद्रो नियमितः एतमनंतार्यं पुरस्कृत्य सर्वैरेतैर्यथावत्कैंकर्यजातं निर्वर्त्यमानमनुपालयस्व अयं चानंतार्यो भगवतो वेंकटनाथस्य निरतिशयकृपापात्रभूतोऽस्मदत्यंतप्रि

यतमः शास्त्रार्थविच्छास्त्रार्थभूततत्तद्धर्माचारव्यवस्थापनकुशलः आचार्यपदनिर्वाहितयास्मा भिर्वियुक्तश्च तस्मादेनं पुरस्कृत्यैतन्नियमनानुरोधेनैव सकलशास्त्रीयधर्ममर्यादा भगवन्मंदिरे निर्वर्तनीया ईदृश आचार्यपदनिर्वाहिणः पुरुषाश्च दिव्यदेशेष्ववश्यं सत्कृत्य वंशतः स्थापनीयाः अन्यथा सकलशास्त्रीयधर्ममर्यादोच्छेदप्रसंगात् ।अत एव चास्माभिः शास्त्रीयधर्ममर्यादास्थापनाय विद्याभिजनादिभिर्माननीयाश्चतुःसप्ततिसिंहासनाध्यक्षा ब्रह्मविदग्रेसराः शास्त्रार्थप्रवचनपरा आचार्यपूरुषाः समंततः संस्थापिता आचार्यपदं निर्वहंति उक्तं ह्याचार्यलक्षणं पाद्मोत्तरखंडे प्रथमाध्याये।आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः।मंत्रज्ञो मंत्रभक्तश्च सदा मंत्राश्रयः शुचिः ॥ सत्संप्रदायसंयुक्तो ब्रह्मविद्याविशारदः। अनन्यसाधनश्चैव तथानन्यप्रयोजनः ॥ ब्राह्मणो वीतरागश्च क्रोधलोभविवर्जितः ॥ सद्वृत्ते शासिता चैव मुमुक्षुः परमात्मवित् ॥ एवमादिगुणोपेत आचार्यस्समुदाहृतः। आचारे शासयेद्यस्तु स आचार्य इतीरित ॥ इति हारीतविशिष्टपरमधर्मशास्त्रेऽपि द्वितीयाध्याये उक्तं।आचार्यं संश्रयेत्पूर्वमनघं वैष्णवं द्विजम्। शुद्धसत्त्वगुणोपेतं नवेज्याकर्मकारकम् ॥ सत्संप्रदायसंयुक्तं मंत्रतन्त्रार्थकोविदम्। ज्ञानवैराग्यसंपन्नंवेदवेदांतपारगम् ॥ शासितारं सदाचारे सर्वधर्मविदांवरं। महाभागवतं विप्रं सदाचा

रनिषेविणम् ॥ आलोक्य सर्वशास्त्राणि पुराणानि च वैष्णवः । तदर्थमाचरेद्यस्तु स आचार्य इ तीरितः इति एवं । आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि ॥ स्वयमाचरते यस्तु स आ चार्योऽभिधीयते ॥ इत्यादिवचनांतराण्यपि द्रष्टव्यानि । इत्थमुक्तलक्षणा आचार्यपूरुषाः प्रति दिव्यदेशं तत्तद्दिव्यदेशधर्मपरिपालनायावश्यं वंशतः संस्थापनीयाः ईदृशपुरुषाणामभावे दिव्यदेशधर्ममर्यादा विलुप्येरन्नेव अत ईदृशलक्षणसंपन्नानामग्रेसरमेनमनंतार्यं पुरस्कृत्यै व तत्तद्धर्मकार्याणीह निर्वर्तनीयानि भगवत्परिजनपरिचारकेषु तत्तद्भगवत्परिचर्याकरणार्हा नर्हताहेतुचरित्रविलोकनेन कदाचिदनेन कस्यचित्परिग्रहः परित्यागो वा ज्ञाप्यमानो नि श्शंकमवश्यं कर्तव्यः ईदृशाश्चाचार्यपदनिर्वाहिणः पुरुषास्तद्दिव्यदेशसंरक्षणश्रीवैष्णवध र्माभिवर्धनैकप्रयोजना इत उपरिष्टादपि काले कदाचित्केचिदागता इह वा सरसिका भवंति चेत्तेऽप्येतद्दिव्यदेशपरिपालकतया सत्कृत्येह स्थापनीयाः दुर्लभा हीदृशाः पुरुषाः त एते मा ननीयतमाः पुरुषा भगवद्दिव्यालयगोष्ठीसत्कारप्रसंगेष्वग्रतः सत्करणीया मंदिरोपजीविभ्यः सर्वेभ्यः परिजनपरिचारकेभ्यः तत्रापि बहूनां समवाये यथायोग्यं क्रमेण सत्कारः कार्यः यथो क्तं शाण्डिल्यविशिष्टधर्मशास्त्रे चतुर्थाध्याये । प्राप्तान्भागवतांस्तत्र गुरुपूर्वं यथाविधि । अर्च

येत्परया भक्त्या द्रव्यैरर्घ्यादिभिः शुभैः॥इति। यस्य यस्याधिकं दृष्टा भक्तिर्ज्ञानक्रियामयी। तं तं समर्चयेत्पूर्वं यथार्हं क्रमयोगतः॥ इति चातस्मादिहाद्यवर्तनशीलस्याचार्यपदनिर्वाहिणोऽनंतार्यस्य संप्रतिनियमितस्य श्रीवेंकटनाथंसर्वकैंकर्यधुरंधरस्य शठकोपयतींद्रस्य तत्सहायतया नियमितानां तत्समशीलकैंकर्यनिर्वर्तनैकपरायणानाममीषामेकांगिनां च यथार्हं क्रमेण सत्कारः कार्यः पूज्यपूजाव्यतिक्रमस्यापूज्याग्रिमपूजनस्य च महानर्थकरत्वं महाभारतराजसूयसदःप्रकरणस्थभीष्मवचनादिभिरपि स्पष्टमवगम्यते। तस्मादर्हत्तमाग्रिमपूजनाभिहत्यनर्हाग्रिमपूजनलक्षणव्यतिक्रमोऽहंकारादिभिर्न कदाचित्केनचिदाचरणीय इति यादवराजं नियम्य तेन तथा व्यवस्थां कारयामास॥१९॥ त एत आचार्यपूरुषा वंशपरंपरया दिव्यदेशपालकतया स्थापनीयाः यतींद्रैकांगिनश्चोत्तरोत्तरमित्थमेवेयं तएव वा कालविशेषदेशविशेषायत्तवैभवातिशयमूलकार्यबाहुल्यत इतोप्यधिका वा संस्थापनीयास्तत्तत्कालकार्यनिर्वाहिभिः एतेष्वित्थं स्थाप्यमानेषु ये पुनः कलिदोषाद्वा प्राचीनप्रबलकर्मबलाद्वा कदाचिदुत्पथगामिनः स्युः ते तदितरैः समुचितदेशकालचरितज्ञैर्धार्मिकाग्रेसरैर्ब्रह्मविदग्रेसरैः सर्वैरपि संहतैर्धर्मलोपमालोचयद्भिर्निर्विशंकं स्वाधिकाराच्च्यावनीया इति च व्यवस्थां स भगवान्रामानुजमु

नि:श्रीवेंकटाद्रौ श्रीशैलपूर्णार्यशिष्यस्यप्राकृतधर्ममर्यादोल्लंघनं श्रीरंगेस्वात्मनापि भगवद्द्रव्यापहारलोलुपेन केनचित् कृतं विषप्रदानं अर्थाशया देहिनां सर्वपापप्रवृत्तिदर्शनं प्राचीनानामर्वाचीनानां च महात्मनामपि काममूलविरुद्धप्रवृत्तिदर्शनं च निदर्शनीकृत्य कादाचित्कधर्ममर्यादातिलंघनं सर्वेषामपि संभावितमुपपादयन् तेनैव यादवराजेन कारयामास ॥

॥ २० ॥ इत्थं व्यवस्थाप्य स भगवान् रामानुजमुनिर्भगवंतं श्रीनिवासमभ्यनुज्ञाप्य श्रीरंगं जिगमिषुर्यादवराजमाहूय संप्रतीह विद्यमानेष्वयमनंतार्य एव सर्वप्रकारत उत्कृष्टतमआर्यः ततस्तन्नियमनानुरोधेनसर्वं परिपाळयेति तं नियम्य अनंतार्यमाहूय भो अनंतार्य त्वमेवेहाद्य वृद्धशिरा असि तावकीनानिमान् शठकोपयतींद्रप्रभृतीनपि तत्तत्कैंकर्येषु यथाक्रमं चोदयन् परिपालय तव स्थाने त्वदीया इव मम स्थाने शठकोपयतींद्रादय इव च श्रीशैलपूर्णार्यस्थानेपि केचित् श्रीनिवासकैंकर्यपरतया स्थापनीयाः तादृशाश्च केचिदिहाद्य न संतीत्येतदेव मे न्यूनं प्रतिभाति तदपि कदाचित्त्वं परिपूरय शठमर्षणकुलेवतीर्णोभगवान् श्रीनाथमुनिर्भगवद्भक्ताग्रेसरो भूत्वा तदानीमनतिबहुलशाखं शठमर्षणगोत्रभवं कृत्स्नमपि तत्कालस्थितकुलजालं स्ववंशं मानयन् माजनिष्ट स नो वंशे जातो वा द्राग्विपद्यतां आ

जन्ममरणं यस्य वासुदेवो न दैवतमिति किल संकल्पयामास श्रीनाथमुनिदिव्यचरणसंबंधी श्रीकुरुकापालतातसूरिर्वीरनारायणपुरे योगं कुर्वाणः अस्मत्परमाचार्ये श्रीयामुनमुनौ तत्त त्सकाशाद्योगरहस्यजिघृक्षयोपगम्य तत्समाधिभंगभिया कुड्यांतरितदेशावस्थिते समाधौ स्वभुजयुगमानम्य कुड्यांतरितदेशे कंचित् पुरुषमालोकयन्तं भगवन्तं साक्षात्कुर्वन् झडिति समाधित उत्थाय मुखमावलक्ष्य किं शठमर्षणकुलजः कश्चिदिहागत इति ब्रुवाणः ततस्तास्मि न् दासोहं यामुन एष आगतोस्मीत्यभिदधान एवागत्य स्वीयचरणयोर्निपत्य स्वामिन्कुड्यां तरितप्रदेशस्थितं दासजनं कथं व्यज्ञासीरिति विज्ञापयति योगदशायां दासेन स्वैरमनुभूय मानो हि भगवान् निजमहामहिष्या स्वपयोधरेण सांद्रगाढं संश्लेषणेपि तन्मुखमवीक्षमाणो द्य मम भुजयुगमानम्य त्रिचतुरान् वारान् मुखमुत्क्षिप्योत्क्षिप्य कुड्यांतरितप्रदेशमालोकय त्।ततो येन केनचिच्छठमर्षणकुलजेनेहागतेन भवितव्यमिति व्यचिंतयमिति प्रतिब्रुवाणः श्री मन्नाथमुनिसंकल्पं भगवतापि सफलमेव कृतं व्याचख्यौ अतस्तादृशे भगवतः प्रियतमे श्री नाथमुन्यऽभिमानभाजने शठमर्षणकुलेजातं कंचिदिह यथावसरं स्थापयेति नियम्य शठको पयतींद्रमाहूय भोशठकोपयते चतुर्भिरेभिरेकांगिभिस्सह अनंतार्यनियमनानुसारी सन्

श्रीवेंकटनाथदिव्यैश्वर्यं श्रीचक्रवर्तिकुमारदिव्याराधनं च निरवद्यं निर्वर्तयस्वेति च नियम्य
श्रीवेंकटाद्रेरवरुरोह ॥ २१ ॥ ततः श्रीपदपुर्यां श्रीगोविंदराजमपि श्रीगोदादेव्या सह अ
भिवंदमानस्तदीयदिव्यैश्वर्यमपि निरवद्यं निर्वर्त्यमानमालक्ष्य बहुलमानंदं भजमानः याद
वराजमाहूय भो यादवराज श्रीगोविंदराज श्रीवेंकटगिरिमहाराजा उभावपि शैवजनकृत
महोपद्रवसागरं प्राप्य कथंचिदुत्तीर्णौ पुनर्यथा तादृशमहोपद्रवप्रसंगं न भजेयातां तथा प
रिपालय अचक्रांकितानां देवतांतरपराणां तत्तद्देवकार्यदर्शनाधिकारादिप्रदानमुखेनापि
वा कदाचित् किंचिदपि वास्मिन् दिव्यदेशे प्रवेशावकाशं मादाः इदानीमिमं दिव्यदेशमुत्सृ
ज्य गच्छता प्रेमातिशयमूलमहानर्थाशंकिना मया तव क्रियमाणामिमामाज्ञां पुरा कदाचि
द्विरोधिनिरसनार्थं द्वारकामुत्सृज्य गच्छता भगवता श्रीकृष्णेन चक्रांकिताः प्रवेष्टव्या याव
दागमनं मम नामुद्रिताः प्रवेष्टव्याः यावदागमनं ममेति द्वारकापुरीद्वारस्थानां कृतां दि
व्याज्ञामिव मन्यमानस्सावधानं तिष्ठेति नियम्य कृपामेदुरशीतलकटाक्षैस्तमनुगृण्हन्परि
पूर्णमंगलाशासनेन चाभिनंदयन् स रामाजमुनिर्विरहासहिष्णुभिरनंतार्यशठकोपियतींद्र
यादवराजप्रभृतिभिर्बाष्पपूरितलोचनैस्सुदूरमनुव्रज्यमानस्स्वयमपि बाष्पपूर्णलोचनः कथंचि

ताननुज्ञाप्य श्रीरंगदिव्यनगरमेव जगाम ॥ २२ ॥ अथ श्रीवेंकटनाथदिव्यालये श्रीरामानुजार्चादिव्यमंगलविग्रहप्रतिष्ठापनतद्विषयप्रबंधानुसंधानवृत्तांत उच्यते ॥ २३ ॥ इत्थं श्रीरामानुजदिव्याज्ञानुसारेण श्रीवेंकटाद्रिदिव्यदेशे सर्वधर्मव्यवस्थास्वविकलं निर्वर्तमानासु श्रीरामानुजमुन्यवतारसमाप्तिं कदाचित्केनचिद्वैष्णवेन कथितामाकर्णयन्ननंतार्यः प्रक्षुभितमानस एकं संवत्सरं पितरं प्रति पुत्र इव कृतशोकदीक्षः श्रीरामानुजमुनिनंदनवनकैंकर्यमप्युपेक्षमाणः श्रीवेंकटनाथमप्यवंदमान एवातिष्ठत ॥ २४ ॥ तदा भगवता श्रीवेंकटनाथेनापि परमं शोकमापन्नेन परमकरुणयार्चकमुखान्नियमितेन दूतेन कथंचिदावाहितो भगवत्संनिधिमुपगतो महति शोकसागरे निमज्जन्ननुन्नमितमुख एव तिष्ठन्ननंतार्यः भो अनंतार्याहं किल श्रीरामानुजमुनिरूपं कंचन महानिधिमेवदैववशात्परित्यक्तवानस्मि तव तु तत्स्थाने अहमेवास्मि त्वं शोकं माकृथाः तव तु न कापि हानिर्भविष्यति तव मनोरथजातं सर्वमहमेव निर्वर्तयानीतिपरमादरेण सांत्वयित्वा निरंतरकुसुमपटलघुमघुमितनिजदिव्यचरणयुगलश्रीशठकोपतीर्थप्रसादाद्यर्पणसपर्यया सत्कृतः किंचिदुन्नमितमुखः श्रीवेंकटनाथमुखचंद्रमंडलं सादरं निरीक्षमाणो भगवंतं व्यज्ञापयत् भगवन् श्रीवेंकटनाथ श्रीनिवास रामानुजमुनिमुद्दिश्य

मया क्रियमाणमिदं विज्ञापनं भवता निर्वर्तनीयमिति प्रार्थयामीति ॥ २५ ॥ ततो भगवता
कथ्यतां भवन्मनोरथो निश्शंकमित्यभिहितोऽनंतार्यः भगवन्नुतमसः परमो धाता शंखचक्रग
दाधरः॥ इतिसर्वस्मात्परत्वासाधारणचिन्हतयाभिहितावपि सुदर्शनपांचजन्यौ परमकरुणया
कल्यादौ कस्मैचिदाश्रिताय तोंडमांश्चक्रवर्तिनाम्ने दुर्विषहशत्रुगणभीरवे तच्छत्रुनिषूदनाय
प्रादाः १ तमिमं भवतो महौदार्यगुणमजानंतो मुग्धा इमे लोकास्त्वयि साधारणश्रीसुदर्श
नपांचजन्यादिदिव्यायुधादर्शनेन देवतांतरत्वेनान्यथा प्रतिपत्तिं कुर्वाणा विनष्टमतयोऽभूव
न् २ तेषां यथावत् परत्वप्रतिपत्तिपूर्वकसमुज्जीवनासिद्धये शैवजनकोलाहलं विनिर्धूय महता
प्रयासेन यादवराजमपि पदवीमुपनीय यथापुरं त्वां श्रीशंखचक्रे भगवान् किल रामानुजमुनि
रंगीकारयामास ३ एवं भवतो निर्दोषनित्यमंगलगुणगणनिधेर्निर्गुणत्वादिदोषान्ब्रुवाणानां
बाह्यकुदृष्टीनां विधूननाय भवंतं स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदं निखि
लजगदुदयरक्षाप्रलयमयलीलं निखिलजगत्कारणं निखिलवेदांतप्रतिपाद्यं अखिलहेयप्र
त्यनीकज्ञानानंदस्वरूपं अप्राकृतदिव्यमंगलविग्रहविशिष्टं समस्तकल्याणगुणात्मकं श्रीभू
मिनीलानायकं ब्रह्मरुद्रादिसर्वसमाश्रयणीयं उभयविभूतिनिर्वाहकं मोक्षप्रदं नित्यमुक्तानुभा

व्यं च सकलवेदांतगणैरुपपाद्य श्रीभाष्यादिप्रबंधांश्च प्रणीय यथावस्थितज्ञानमुपनीयायं किल जगदपालयत्करुणया ४ ततस्तस्यै तस्य निखिलजगन्महोपकारकस्य भगवतो रामानुजमुनेर्गुणगणविषयं प्रपन्नगायत्रीसमाख्यया विख्यातमष्टोत्तरशतगाथात्मकं श्रीरामानुजशतांताद्यपरनामानंश्रीरंगामृतसूरिप्रबंधमपिश्रीमत्यध्ययनोत्सवेपृथगेकस्मिन् दिने समाकर्णयितुमर्हसि ५ दिव्यसूरीणां श्रीवेंकटगिरिमारुह्य भगवन् मंगलाशासनाकरणन्यूनतापरिहृतये निरंतरश्रीरामानुजमुनिसंबंधि भवन्मंगलाशासननिष्पत्तये कलिदोषाभिवृद्धबाह्यकुदृष्टिकुहनानिरसनाय च श्रीरामानुजमुनिमर्चारूपेणास्मिन् दिव्यदेशे प्रतिष्ठापयितुमनुमन्यस्वेति प्रार्थनामकार्षीत् ॥ २६ ॥ इत्थमभ्यर्थितो भगवान् श्रीवेंकटनाथः सुप्रहृष्टः भो अनंतार्य भवताप्रार्थ्यमानमिदं वरद्वयं ममातीवप्रियतमं १ मदीयपरांकुशपरकालादिदिव्यसूरिदिव्यप्र[illegible]ण इव मदीयरामानुजमुनिविषयप्रबंधोपि श्रीमत्यध्ययनोत्सवे पृथगेवैकस्मिन् दिने प्राधान्येनानुसंधीयतां स्वैरं प्रपन्नैः २ श्रीरामानुजमुनिरपि भगवन्मनोरथानुगुण्येन मदीयमंदिर एव क्वचिद्भागेनंतगरुडविष्वक्सेनादिवदर्चारूपेण यथाविधिप्रतिष्ठाप्यतामितिप्रत्यवोचत ॥ २७ ॥ ततोनंतार्योपि भगवत्कटाक्षविशेषेण संप्रहृष्टमनाः पुरा स्वाभिमति

विशेषानुगुण्येन श्रीरामानुजमुनिनाध्ययनोत्सवचरमदिवसे पृथगनुसंधेयतया नियमितस्य श्रीमधुरकविदिव्यसूरिदिव्यप्रबंधस्यानुसंधानदिवससमनंतरदिवसे श्रीरामानुजशतांतादि प्रबंधं पार्थक्येनानुसंधेयं व्यवस्थाप्य ततः पश्चात् प्राग्रामानुजमुनिनियमितं श्रीशैलपूर्णार्यवृक्षं स्वविशेषप्रत्यभिज्ञापकं शीतलतीर्थामृताभिगमयात्रोत्सवं कर्तव्यं व्यवस्थाप्य प्राक् स्वस्मै श्रीरामानुजमुनिना गाढं समालिंगनेन संस्कृत्य दत्तं तदाप्रभृति स्वमंदिरे सादरं समाराध्यमानं तदीयदिव्यमंगलविग्रहमेव श्रीवैखानसागमोक्तरीत्या यथाविधि संस्कृत्य भगवद्दिव्यालय एव वामपार्श्वे क्वचिन्मंडपे प्रतिष्ठाप्य तत्पादारविंदयुगलशिरस्कां पादुकामपि कांचित् प्रतिष्ठाप्य श्रीमद्रामानुजाचार्यश्रीपादांभोरुहद्वयमित्यादि भगवद्वचनप्रामाण्येन स्वस्य श्रीरामानुजमुनिपादारविंदरूपतायाः रामानुजपदच्छायागोविंदाव्हानपायिनीत्यादिवचनप्रामाण्येन गोविंदार्यस्य तदीयपादच्छायारूपतायाः पादुके यतिराजस्य कथयंति यदाव्हयेत्यादिवचनप्रामाण्येन दाशरथिसूरेस्तदीयपादुकारूपतायाश्च व्यवस्थितत्वेप्यस्मिन् दिव्यदेशे स्वाभिमानातिशयेन पादारविंदतच्छायाविशिष्टायास्तत्पादुकाया अनंतार्य इति स्वसंज्ञामेव कृत्वा इत्थमनेकश्रीवैष्णवदर्शनसंबंधिधर्माननेकानभिवर्धयन् सर्वदेशादिशाका

लेष्वव्याहतपराक्रमरामानुजार्यदिव्याज्ञावर्धतामभिवर्धताम् ॥ रामानुजार्यदिव्याज्ञा प्रतिवासरमुज्ज्वला । दिगंतव्यापिनी भूयात्साहिलोकहितैषिणीति ॥ प्रतिसमयं भगवत्सन्निधौ श्रीरामानुजार्यदिव्याज्ञाभिवृद्धिमेव प्रार्थयन् श्रीवेंकटनाथमंगलाशासनैकपरायणस्तदीयगुणानुभवकैंकर्याणि च कुर्वाणस्सुखमवात्सीत् ॥ २८ ॥ अथ श्रीवेंकटाद्रिदिव्यदेशे भगवद्दिव्यालयादिषु श्रीमदध्ययनोत्सवादिषु कृत्स्नदिव्यप्रबंधानुसंधानप्रसंगेषु प्रथमदिव्यसूरिदिव्यप्रबंधोपक्रमपूर्वकमितरदिव्यसूरिप्रबंधानुसंधानस्य अंते पृथगेकास्मिन् दिवसे श्रीमधुरकविदिव्यसूरिप्रबन्धानुसन्धानस्य च निमित्तभूतो वृत्तांत उच्यते ॥ २९ ॥ कदाचन श्रीरामानुजमुनेर्दिव्यसूरिदिव्यप्रबन्धोपदेशाचार्यभूतः सप्तशतद्राविडकाविवरमूर्धाभिषिक्तः श्रीरंगनाथदिव्यमंगलविग्रहदिव्यसौंदर्यानुभवविद्धहृदयः देवगानमर्यादया दिव्यप्रबंधगानकुशलः तत एव हेतोः श्रीयामुनमुनिना दत्तमुनिवाहनापरनामधेयः श्रीशठकोपश्रीरंगराजविज्ञप्तिकर इति विख्यात आर्यचूडामणिः कदाचित् श्रीरंगक्षेत्रे श्रीकार्तिकमहोत्सवे भगवतः श्रीरंगनाथस्य मंगलाशासनं कृत्वा श्रीरामानुजयतींद्रस्य मठमुपगतः तेन च प्रत्युत्थानप्रणामादिभिः सत्कृतः भो राजानमुने श्रीवेंकटगिरिदिव्ययात्रां वि

शेषतः प्रशंसात दिव्यसूरयः १ यथाह भगवान् परांकुशनामा दिव्यसूरिचूडामणिः श्रीमुखसूक्ताख्यनिजद्राविडसंहितातृतीयकांडतृतीयश्रीमुखसूक्तदशमगाथायां । क्लृप्तायुरवधिसन्निधिमुपगम्योपेत्य करणशैथिल्यम् । दौर्बल्यभजनतः प्राग्विस्तृतफणितल्पवेंकटं व्रजत ॥ सांद्रारामममनोहरकुसुममयीर्यो बिभर्ति विपुलतटीः इति २ आह च भगवान् षट्दर्शनपारावारसारासारपारदृश्वा भक्तिसारदिव्यसूरिश्चतुर्मुखश्रीमदंतादिसंज्ञितनिजद्राविडसंहिताद्विचत्वारिंशगाथायां। गत्वा प्रणमत नितरामुत्तुंगं वेंकटं स्थिरीभूय। पापापहरं शीलत्सदासुगंध्यब्जसन्निकर्षगतः ॥ चतुराननस्त्रिनेत्रस्तत्राखिलदेवदैत्यवंद्यस्य । द्वावपि विष्णोरंघ्र्योः कमलानिसमर्प्य कलयतस्तोत्रं इति ३ प्रतिपादयति च स एव श्रीमछंदोवृत्ताख्यनिजद्राविडसंहितैकाशीतितमगाथायां । मथितं दुग्धांभोनिधिमधिशैय्य च कालनेमिमपि जित्वा। क्षुभितैर्ह्यनुजसहायी भवितुं समुपेत्य राघवीभूय ॥ निबिडान् सप्त च वृक्षान् विध्वा बाणेन वेंकटं गंतुः । पत्युः पादावेव प्राप्य प्रतिवासरं समाश्वसतेति ४ इत्थमेव बहुषु स्थलेषु दिव्यसूरिभिः सानुरागहर्षैः शंसितां श्रीवेंकटाद्रियात्रां कृत्वा समागमिष्यामीत्यभिदधानः श्रीरामानुजमुनिनाभ्यनुज्ञातः श्रीवेंकटाचल प्रति प्रस्थितो मध्येमार्गे श्रीकांचीमहानगरे

महादयापालश्रीदेवराजनाम्ना विख्यातं भगवंतमर्थितार्थपरिदानदीक्षितं वरदमभिवंद्य श्रीवेंकटगिरेरुपत्यकायां श्रीपदपुरीमासाद्य श्रीरामानुजमुन्यभिमतविषयं भगवंतं श्रीगोविंदराजं प्रणम्य श्रीवेंकटाद्रिसमारोहणसरणिसोपानारंभस्थलस्थितं श्रीतिंत्रिणीवृक्षं तन्मूले गंडशैले विराजमानभगवद्दिव्यचरणारविन्दयुगलं तत्परिसरे विराजमानान् श्रीपरांकुशपरकालादिदिव्यसूरींश्चाभिवंदमानस्ततः श्रीवेंकटाद्रिमारुह्य मध्येमार्गं विराजमानं श्रीकाननन्रृसिंहं चाभिवंद्य शिलाऽऽवरणपर्यंतं गतः।ततः श्रीशैलानंतार्येणाभ्युद्गतः ततः परस्परवंदनस्वागतयोगक्षेमानुप्रश्नपूर्वकं तेन सह समाभाषमाणस्समागत्य श्रीवेंकटनाथदिव्यालयमहाद्वारसंमुखे प्रणम्य महावीथिषु प्रदक्षिणं समागत्य श्रीमत्यां स्वामिपुष्करिण्यां स्नात्वा कृतनित्यकृत्यः श्रीवृत्ताख्यश्रीपरांकुशदिव्यसूरिसंहितायां 'हीनोक्तिर्वा भवतु प्रलयपयोधेः प्रलोलकल्लोले॥ कृत्स्नंजगद्वराहीभूय समुद्धृत्य कृतमहोपकृतिं॥सुमहाकल्पकवाटीसंपन्नानां दिवौकसां चापि। अन्येषां मनुजानामपिसर्वेषां ततोऽपराणां च। विशदविलक्षणविलसद्विज्ञानविधानविरचितोपकृतिं। अधिदेवमंतरेण हि न मया दृष्टं मनोहरं वस्तु'इत्येवमर्थयैकोनशततमगाथया तदभिमतस्य श्रीमतो ज्ञानवराहस्य मंगलाशासनं कृत्वा पुनः श्रीवेंकटनाथदिव्यालयम

व्यसूरिदिव्यसू॰

हाद्वारसंमुखे प्रणम्य सेवाक्रमेण श्रीमति भगवद्दिव्यालये श्रीबलिपीठध्वजस्तंभसन्निधौ प्रणम्य श्रीमहानसलक्ष्मीं प्रणम्य श्रीतीर्थभूतं श्रीमत्सुंदरस्वामिकूपापरनामधेयं सुवर्णकूपं प्रदक्षिणीकृत्य श्रीमदानंदनिलयदिव्यविमानं प्रणम्य प्रदक्षिणीकृत्य श्रीमति कटाहतीर्थे तीर्थपानं कृत्वा विष्वक्सेनं प्रणम्य ततः श्रीमंतं श्रीवेंकटनृसिंहदेवं च प्रणम्य भगवंतं वैनतेयमपि प्रदक्षणी कुर्वन् श्रीकृष्णमंडपमासाद्य द्वारपालकयोस्सन्निधौ स्थित्वा अलंकृतं मत्तगजमिव विराजमानं महादिव्यसूरिश्रीसूक्ताख्यायां श्रीभट्टनाथसूरिसंहितायां प्रथमकांडषष्ठश्रीसूक्तदशमगाथोक्तरीत्या सर्वाभरणभूषितं श्रीनिधिं निर्धनो महानिधिमिव दूरतः पश्यन् तां गाथामनुसंदधान एव सहर्षपुलकोद्गमं प्रणम्य द्वारांतःप्रविश्य स्वाचार्यभूतश्रीयामुनाचार्यप्रणीतस्तोत्ररत्नं "कदा पुनः शंखरथांगकल्पकध्वजारविंदांकुशवज्रलांछन। त्रिविक्रम त्वच्चरणांबुजद्वयं मदीयमूर्धानमलं करिष्यति इत्यंतमनुसंदधानः भगवता श्रीवेंकटनाथेन एनां स महात्मा सुदुर्लभ इत्युक्तमधिकारिविशेषं मन्वानेनार्चकमुखेन शठकोपश्रीरंगराजविज्ञप्तिकरार्यमाहूय अंघ्र्योरधस्तादनुरूपं प्रविश्य भोदासा वर्धध्वमिति श्रीमुखसूक्ताख्यश्रीपरांकुशदिव्यसूरिसंहिताषष्ठकांडदशमश्रीमुखसूक्तैकादशगाथोक्तरीत्या नियमितः सन् परमहर्षपरिपूरितांत

यामासेत्यनुसन्दधानः श्रीनाथमुनिवंश्यं कंचिद्विज्ञप्तिकरमाहूय तस्य च श्रीशैलेशविज्ञप्तिकरार्य इति नामधेयं च निधाय भोःश्रीशैलेश विज्ञप्तिकरार्य इतः प्रभृति श्रीवेंकटाद्रौ कृतनित्यवासस्त्वं दिव्यसूरिप्रबंधान् देवगानमर्यादया प्रतिदिनं श्रीवेंकटनाथसान्निधौ गायंस्तमभिनंदय श्रीवेंकटनाथेन श्रीशठकोपरंगराजविज्ञप्तिकरार्यं प्रति स्वविषयप्रथमदिव्यसूरित्रयप्रबंधगानस्य प्रथमं कर्तव्यतया साक्षादेव नियमनादित उपरि प्रतिसंवत्सरं श्रीमदध्ययनोत्सवादिकालेषु कृत्स्नप्रबंधाध्ययनप्रसंगे श्रीवेंकटाद्रिदिव्यदेशप्रधानविषयप्रथमदिव्यसूरिप्रबंधोपक्रमं गेयच्छंदोभिधानप्रबंधराश्यनुसंधानं प्रथमदिने कृत्वा परदिनप्रभृति श्रीरंगनाथदिव्यालयवच्छ्रीभटनाथदिव्यसूरिप्रबंधप्रथमश्रीसूक्तमारभ्य तदितरप्रबंधाननुसंधाय तत एकादशीप्रभृति दशसु दिनेष्वेकैकशः श्रीमुखसूक्तप्रबंधकांडाननुसंधाय समाप्य ततः परदिने प्राक् श्रीशठकोपदिव्यसूरिणा श्रीमुखसूक्ताख्यप्रबंधतृतीयकांडतृतीयश्रीसूक्तप्रथमगाथायां प्रार्थितं श्रीवेंकटनाथस्य सर्वदेशसर्वकालसर्वावस्थोचिताशेषशेषवृत्तिरूपनित्यकैंकर्यंतदीयमनोरथपूरणकुर्वाणेन मुमुक्षूणां सकलश्रीवैष्णवानां दिव्यसूरिसूक्तिनित्यानुसंधानसिद्धये दिव्यसूरिदिव्यसूक्तिप्रवचनं कुर्वाणेन श्रीपरांकुशदिव्यसूरौ श्रीमधुरकविदिव्यसूरिवच्चर

मपर्वनिष्ठांभजमानेनतादृशनिष्ठाप्रतिपादकतदीयदिव्यप्रबंधं तदुक्तार्थंयथावदनुष्ठानसाव
धानमनुदिनमनुसंदधानेन तादृशनिष्ठाभजनाधीनभगवत्कटाक्षविशेषभाजनतया स्वात्मा
त्मीयानां नियतधार्यतया व्यवस्थापितमधुरकविदासनामधेयेनानंतार्येणसादरमनुसंधीयमा
नो मधुरकविदिव्यसूरिप्रबंधः प्राधान्येन पृथगनुसंधेय इति व्यवस्थाप्यानंतार्याय श्रीमुख
पत्रिकामपि विलिख्य दत्वा तं विज्ञप्तिकरार्यं श्रीवेंकटाद्रिं प्रतिप्रस्थापयामास॥ ३२॥ तदनु स
च श्रीशैलेशविज्ञप्तिकरार्योनंतार्याय दत्तां श्रीमुखपत्रिकां शिरसा गृहीत्वा सकुटुंबः श्रीवेंकटा
द्रिमासाद्य प्रथममनंतार्यमासाद्य पररूपरवंदनकुशलप्रश्नादिकरणसमनंतरं श्रीरामानुजमु
निदत्तां श्रीमुखपत्रिकां दत्वा श्रीरामानुजमुनिसंदिष्टं वृत्तांतजातमपि न्यवेदयत् ॥ ३३ ॥ ततो
ऽनंतार्यस्तांश्रीमुखपत्रिकां शिरसा गृहीत्वा परमादरेणाभिविक्षमाणः श्रीशैलेशविज्ञप्ति
करार्येण सह श्रीवेंकटनाथसन्निधिं गत्वा भोःश्रीवेंकटनाथ दिव्यसूरिदिव्यप्रबंधाः प्रतिदि
नं श्रीमत्यध्ययनोत्सवे च भवत्सांनिधौ देवगानेन गातव्या इति नियम्य भवन्नाम्ना कृत
नामधेयं कंचन विज्ञप्तिकरं संप्रेष्य श्रीमुखपत्रिकामपि संप्रेष्य भवत्सन्निधौ दिव्यसूरि
दिव्यप्रबंधगानव्यवस्थापनाय मामाज्ञापयति भगवान् रामानुजमुनिः तदीयं नियमनं

मया निर्वर्त्यमानं भवता कृपया सादरमंगीकर्तव्यमिति भगवंतं संप्रार्थ्य तेन चार्चक मुखेन भोअनंतार्य श्रीरामानुजमुनिकृपाविशेषभाजने भवति मामकीनः कृपाप्रवाहो धा रालः प्रवहति श्रीरामानुजमुनिनियमितदिव्यप्रबंधगानं यथाविधि व्यवस्थाप्य यथामनो रथं निर्वर्तय अहं च श्रीरामानुजमुनिनियमनं परमादरेण स्वीकरोमीति नियमितः श्रीरा मानुजमुनिश्रीमुखपत्रिकालिखितदिव्याज्ञानुरोधेन प्रतिसंवत्सरमध्ययनोत्सवे प्रथमं प्रथम दिव्यसूरिप्रबन्धोपक्रमपूर्वकं गेयच्छंदोभिधानं प्रबंधराशिमनुसंधाय ततोऽन्यान् दिव्यसूरि प्रबंधाननुसंधाय ततः श्रीमुखसूक्तसंहितां प्रतिदिनमेकैककांडक्रमेण दशसु दिनेष्वनुसंधा य सामप्य ततःपरदिने स्वाभिमतं श्रीमधुरकविदिव्यसूरिदिव्यप्रबंधं प्राधान्येन पृथगनुसं धेयतया च व्यवस्थाप्य तथैव निर्वर्तयन् श्रीवेंकटनाथमानंदयंस्तं श्रीशैलेशविज्ञप्तिकरार्थं तत्रैवावासयत् ॥ ३४ ॥ इत्यनंतार्यगुंफितायां श्रीवेंकटाचलेतिहासमालायां सप्तमः स्तबकः

श्रीमतेरामानुजायनमः॥ अखिलात्मगुणावासमज्ञानतिमिरापहम् ॥ आश्रितानां सुशरणं वन्देनन्तार्यदेशिकम् ॥ १ ॥ श्रीमद्रामानुजाचार्यश्रीपादांभोरुहद्वयम् ॥ सद्वृत्तमाङ्गसन्धार्य मनन्तार्यमहं भजे ॥ २ ॥

मुद्रितेयं श्रीवेंकटाचलेतिहासमाला ( श्रीवेंकटेश्वरराम्नि ) निजांकनालये श्रीकृष्णदासात्मजाभ्यां
गंगाविष्णु खेमराजगुप्ताभ्यां मुंबय्याख्यपुर्यां दिगिभेंदु १८१० मितेशाकेतथे-
षुवेदांकभू १९४५ मितवैक्रमाब्दे० ॥

पुस्तकमिलनेकाठिकाणा

श्रीवेंकटेश्वर छापखाना ( मुंबई ) गंगाविष्णु श्रीकृष्णदास
और विशेष पुस्तकका नाम और भाव तपास करना होय तो आधाआनेका टिकट
भेजनेसे सूचीपत्र भेजादिया जायगा ।